## प्रमेयदीपिका

प्रकारान्तरेण शोकं शङ्कते- **तथाऽपीति** ॥ यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया न शोको युक्तः। उक्तविधयाऽऽत्महानेरभावात्। देहहानावपि प्रतिनिधिलाभात्। तथाऽपि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीति धिया मे शोकः समुत्पतितः। कथम्? तद्दर्शनाभावादिना। 'तत्' इति बान्धवादिदेहादिपरामर्शः[१]। आदिपदेन विकृततद्दर्शनं च गृह्यते। प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः। तेषु मृतेषु तद्दर्शनाद्यभावात् सुखहानिः। तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेति। एतन्निषेधपूर्वकं श्लोकमवतारयति- **नेति** ॥ 'मीयन्ते विषया एभिरिति[२] मात्रा इन्द्रियाणि' इति व्याख्यानमसत्। पुराणादौ मात्राशब्दस्य विषये रूढत्वादित्याशयवान् व्याचष्टे- **मीयन्त इति** ॥ ननु गन्धरसरूपस्पर्शशब्दा विषयाः। अतो भिन्नपदत्वे द्वन्द्वत्वे वा स्पर्शानां विषयान्तर्गतानां पुनरुक्तिर्व्यर्थेत्यत आह- **तेषामिति** ॥ विषयाणाम्। तथाऽप्यनुपपत्तिः, विषयाणां स्पर्शाभावादित्यत आह- **सम्बन्धा इति** ॥ एवं तर्हि किं षष्ठीसमासपरिग्रहेण। भिन्नपदत्वादावपि दोषाभावादित्यतो वाक्यं योजयति- **त एवेति** ॥ तुशब्दस्यार्थ एवेति। नहि विषयाणां सम्बन्धानां च पृथगेतत्कार्यं सम्भवतीति भावः। ननु शीतोष्णशब्दौ विषयविशेषवचनौ। तत् कथं विषयसम्बन्धा विषयविशेषं दद्युः। कथञ्च साक्षात् सुखदुःखे। कश्च प्रतिसम्बन्धी। कस्मै ददतीत्यत आह- **देह इति** ॥ देहशब्देनात्रेन्द्रियाणि लक्ष्यन्ते। अनेन शीतोष्णशब्दौ सकलविषयोपलक्षकौ। विषयोक्त्या च तत्साक्षात्कारो लक्ष्यत इति लक्षितलक्षणेयम्। अनुभवद्वारैव सुखदुःखदानम्। प्रतिसम्बन्धी देहः। दानं चाऽत्मन इत्युक्तं

१. ग. बान्धवादिपरामर्शः।

२. ग. यैरिति।

भवति। एतेन लौकिकी प्रतीतिरर्जुनेन शङ्किताऽनूद्यते। तत्तद्विषयाणां तैस्तैरिन्द्रियैर्ये ये सन्निकर्षाः तैस्तैः तत्तद्विषयसाक्षात्कारो भवति[1]। तत्रेष्टविषयसाक्षात्कारात् सुखं भवति। अनिष्टविषयसाक्षात्काराद् दुःखं भवतीति। भवेदेतदेवं ततः किं प्रकृतशङ्काया इत्यतः तुशब्दात् परया काका सिद्धमर्थमाह- **नहीति** ॥ स्वतः विषयेन्द्रियसन्निकर्षमात्रेण। दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे च। अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः? नहि। किन्नाम? अभिमानसहिता इत्युक्तं भवति। अभिमानो नामात्र विपयेषु शोभनाध्यासनिमित्तः स्नेहः, अरित्वादिभ्रमनिमित्तो द्वेषश्च, शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकोऽविवेक इत्यादिः। विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः, येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इति शङ्कापूर्वकमुत्तरपादं व्याचष्टे- **कुत इति** ॥ ननु कथमिदं लभ्यते। यत इत्यध्याहारादिति ब्रूमः। प्रयोजनान्तराभावाद् हेत्वर्थगर्भत्वेन वा। 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवत् शीतोष्णसुखदुःखदत्वमुपसङ्क्रामति। मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तस्याऽगमापायित्वादित्यर्थः। अनेन कथमुक्तशङ्कानिरास इत्यतोऽतिप्रसङ्गमुखेन व्याचष्टे- **यदीति** ॥ मात्रास्पर्शा यदि स्वतः स्वयमेवाभिमानमनपेक्ष्य, आत्मनः शीतोष्णसुखदुःखदाः स्युः तर्हि सुप्तावपि स्युः। नहि कारणसामग्री कार्यं व्यभिचरतीत्यर्थः। नच वाच्यं सुप्तौ विषयेन्द्रियसम्बन्धा एव न सन्तीति। स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात्। अत एव शीतोष्णग्रहणं कृतम्। एतेनेन्द्रियमनस्सन्निकर्षाभावोऽपि प्रत्युक्तः। नचाऽत्ममनस्सन्निकर्षाभावः। मनसः कदाऽप्यात्मवियोगाभावस्य वक्ष्यमाणत्वात्। अतिप्रसङ्गस्य विपर्यये पर्यवसानं वदन् साक्षादर्थं दर्शयति- **अत**

---

१. ग. तत्तद्विषयसाक्षात्कारा भवन्ति।

**इति ॥** अतो मात्रास्पर्शा नाऽत्मनः स्वतः स्वयमेव केवलाः शीतोष्ण-सुखदुःखदा भवन्तीति सम्बन्धः। अत इत्युक्तस्यैव[1] विवरणं यतस्तन्निमित्ता एवेति। तदित्यभिमानपरामर्शः। तेन निमित्तेन सहिता एव शीतोष्णसुख-दुःखदा यत इत्यर्थः। तत् कुत इत्यत उक्तम्- **मात्रेति ॥** मात्रास्पर्शा जाग्रत्स्वप्नयोरभिमानवतोरेव ते तथाविधाः शीतोष्णसुखदुःखदाः सन्ति भवन्ति नान्यदा अभिमानरहिते सुप्त्यादाविति मात्रास्पर्शानां शीतोष्णसुख-दुःखदत्वस्याभिमानान्वयव्यतिरेकानुविधायित्वादित्यर्थः। नन्वभिमान-हीनेऽपि ज्ञानोत्पत्तिः तृणादौ दृश्यते। सत्यम्।सुखदुःखहेतुभूतं ज्ञानमत्राधि-कृतमित्यदोष इति।

## भावदीपिका

**विकृततद्दर्शनं** वेधच्छेदादिविकारयुक्तदेहदर्शनम्। **विषये** शब्दादौ। **द्वन्द्वे** ऐकपद्यमङ्गीकृत्येति शेषः ॥ **एवं तर्हीति ॥** स्पर्शशब्दस्य सम्बन्धार्थकत्व इत्यर्थः ॥ **किमिति ॥** ऐकपद्यमङ्गीकृत्येति शेषः ॥ **भिन्नपदत्वादावपीति ॥** भिन्न-पदत्वम्, एकपदत्वं वाऽङ्गीकृत्य द्वन्द्व एवाऽश्रीयताम्। स्पर्शपदस्य सम्बन्धा-र्थकत्वेन पुनरुक्तिदोषाभावादित्याशयः। ननु कथमनेनोक्तशङ्कापरिहार इत्यत आह- **न हीति ॥** विषयाणां सम्बन्धानां च सकाशादिति शेषः ॥ **एतत्कार्यम् ॥** अनुभवद्वारा सुखादिरूपं कार्यम्। यदि भिन्नपदत्वमेकपदत्वेऽपि द्वन्द्वो वाऽऽश्रियेत तदा विषयाणां सम्बन्धानां च प्रत्येकमनुभवादिकारणत्वमुक्तं स्यात्। न चैवम्। इन्द्रियाद्यसम्बद्धविषयाद् विषयास्पृष्टकेवलसम्बन्धाद् वाऽनु-भवादिरूपकार्यादर्शनात्। अत ऐकपद्यमङ्गीकृत्य षष्ठीसमास एवाऽश्रयणीय इति भावः॥ **साक्षात् ॥** अनुभवद्वारमन्तरेणेत्यर्थः॥ **प्रतिसम्बन्धीति ॥** अधिकरण-मित्यर्थः। कुत्र ददति, भोगायतनं किमिति यावदिति भावः।

---

१. प. एवशब्दो न पठ्यते।

नन्विन्द्रियार्थसन्निकर्षस्यैवानुभवहेतुत्वात् कथं देहविषयसम्बन्धस्यानुभवहेतुत्वमुच्यत इत्यत आह - **देहशब्देनेति** ॥ देहाश्रितत्वं लक्षणाबीजसम्बन्धः ॥ **अनेनेति** ॥ 'देहे शीतोष्णादि' इत्यादिपदप्रयोगेणेत्यर्थः ॥ **लक्षितलक्षणेति** ॥ लक्षितमर्थं द्वारीकृत्य या लक्षणा सा लक्षितलक्षणा। अत्र हि मात्रास्पर्शानां शीतोष्णदत्वद्वारा सुखादिदत्वमुच्यते। तत्र विषयसम्बन्धानां शीतोष्णविशेषविषये द्वयदत्वस्य बाधाच्छीतोष्णशब्देन सकलविषया लक्ष्यन्ते। इदमप्यनुपपन्नम्। विषयसम्बन्धानां समस्तविषयदत्वस्यापि बाधितत्वादतस्तेन तत्साक्षात्कारो लक्ष्यत इति लक्षितलक्षणेति भावः ॥ **अनुभवद्वारेति** ॥ मूले विवक्षितमित्यर्थः। 'कथञ्च' इत्यस्य परिहारोऽयम्। ननु विषयसम्बन्धा अनुभवद्वारा सुखदुःखे कुत्र कस्य ददति इति प्रतिसम्बन्ध्याकाङ्क्षायाः किमुत्तरमत आह- **प्रतिसम्बन्धीत्यादि** ॥ तथाऽपि तद्दर्शनाभावादिना शोक इत्याशङ्कापरिहारस्य पूर्वार्धेऽदर्शनात् तस्य वैयर्थ्यमित्यत आह- **एतेनेति** ॥ पूर्वार्धेनेत्यर्थः। अनुवादप्रकारं दर्शयति- **तत्तदिति** ॥ **परयेति** ॥ तदनन्तरमध्याहृतयेत्यर्थः ॥ **काकेति** ॥ स्वरविशेषयुक्तकिंशब्देनेत्यर्थः। 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यभिधानात्। विषयसन्निकर्षमात्रस्य दुःखादिदत्वाभावादाह- **दुःखादिरिति** ॥ तथा च स्वतो विषयसन्निकर्षमात्रेण साक्षात्कारद्वारा दुःखादिर्न हि सम्भवतीत्यर्थः। तुशब्दार्थानुवाद एव- **केवला इति** ॥ काकुप्रदर्शनम् - **किमिति** ॥ पूर्वमभिमानशब्दस्य ज्ञानार्थकतया व्याख्यातत्वादत्र तदर्थत्वभ्रमं वारयति- **अभिमान इति** ॥ **सुखदुःखयोश्चेति** ॥ ज्ञानद्वारेति शेषः ॥ **नन्विति** ॥ आगमापायिन इत्यस्याऽगमापायित्वादिति व्याख्यानं कथं लभ्यते? हेतुत्वज्ञापकस्य यत इत्यादिपदस्य गीतायामभावादिति भावः। अध्याहारेण समाधानस्य जघन्यत्वादाह - **हेत्वर्थेति** ॥ यत इत्यध्याहारेण वा हेत्वर्थगर्भत्वेन वेदं हेतुतया किमर्थं व्याख्यायत इत्यत उक्तम्- **प्रयोजनान्तरेति** ॥ एवं च वैयर्थ्यमेव स्यादित्याशयः।

नन्वर्जुनशङ्कापरिहाराहेतुत्वान्मात्रास्पर्शानामुत्पत्तिविनाशकथनमसङ्गतमित्यत आह- **सविशेषणे हीत्यादिना ॥** अत्र सति विशेष्ये बाधे इति पूरणीयम्। अन्यथा स्वाचारादिमान् ब्राह्मणो भोजयितव्यो न हन्तव्यश्चेत्यादावतिप्रसङ्गादिति ज्ञेयम्। लोहितोष्णीषा ऋत्विजः प्रचरन्ति, न जीर्णमलवद्वासाः स्नातकः स्यात्, स्वर्गी ध्वस्त इत्याद्युदाहरणम्। ननु प्रकृते मात्रास्पर्शेषु आगमापायित्वस्य सिद्धत्वेन कथं विशेष्यबाध इति चेत्, उच्यते। प्राप्तबाधोऽप्राप्तबाधः प्रत्याम्नायाद् बाधो वैयर्थ्याच्चेति बाधश्चतुर्विधः। तत्राऽद्यो यथा- घटो नास्तीति। द्वितीयो यथा- शशविषाणं नास्तीति। तृतीयो यथा- शरैः कुशानामाभिचारिके कर्मणि प्रत्याम्नायात्। चतुर्थो यथा- कृष्णलचराववघातस्य। तत्र वितुषीभावस्यासम्भवेनावहननस्य वैयर्थ्यदिति मीमांसकसम्मतत्वात्। प्रकृतेऽपि मात्रास्पर्शेष्वागमापायित्वस्य सिद्धत्वेन तत्कथनस्य वैयर्थ्याद् बाध इति। यथोक्तमन्यथानुमितौ चेत्यधिकरणीयसुधाटिप्पण्यामस्मदाचार्यचरणैः- नित्यत्वस्याङ्गीकारविषयविशेषणत्वं वैयर्थ्यप्रसङ्गेन बाधितमिति भातीति भाव इति ॥ **कारणसामग्रीति** ॥ कारणसाकल्यरूपविशिष्टार्थपरः सामग्रीशब्दः कारणरूपविशेषणान्तरसमवधानाद् विशेष्यभूतसाकल्यमात्रपरः। तथा च कारणसाकल्यमित्यर्थः। विशिष्टपराणां शब्दानां विशेषणान्तरसमवधाने विशेष्यपरतायाः 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इत्यादौ दृष्टत्वादिति ध्येयम्। तथा च सुप्तौ अभिमानरहितमात्रास्पर्शरूपकारणसाकल्यस्य सत्त्वात् कार्यं दुःखादि स्यादेवेति भावः॥ **स्पर्शत्वगिन्द्रियेति** ॥ भूम्यां कशिप्वादौ हि शयनं कृतवत एव सुप्तिरिति दृष्टमिति भावः ॥ **अत एवेति** ॥ स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वादेवेत्यर्थः। गीतायां विषयसामान्यग्रहणे कार्ये तद्विहाय यच्छीतोष्णादिरूपविषयविशेषग्रहणं कृतं तद् विषयेन्द्रियसन्निकर्षस्य सुप्तौ सद्भावं सूचयितुमेवेति भावः।

नन्विन्द्रियमनःसन्निकर्षस्य ज्ञानद्वारा सुखादिहेतोः सुप्तावभावाद् ज्ञानाद्याभावोऽस्तु। किमनेनेत्यत आह- **एतेनेति**॥ त्वगिन्द्रियमनःसन्निकर्ष-सत्त्वेनेत्यर्थः। नन्वात्ममनः सन्निकर्षाभावात् सुप्तौ ज्ञानाद्यभाव इत्यत आह- **न चेति ॥ वक्ष्यमाणत्वादिति** ॥ अष्टमाध्याये 'मनो हृदि निरुध्य च' इत्येतद्व्याख्यानसमये 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इति प्रमाणेन वक्ष्यमाणत्वादित्यर्थः। अभिमानवतोरभिमानापादकयोः॥ **ते** तव॥ त इत्यनूद्य तथाविधा इति व्याख्यानं वा । **तथाविधाः** अभिमानसहिताः ॥ **शीतो-ष्णेति**॥ ज्ञानद्वारेति शेषः। तृणादावभिमानाभावेऽपि इन्द्रियसन्निकर्षमात्रेण ज्ञानोदयदर्शनाद् व्यभिचार इति नाभिमानस्य ज्ञाननिमित्तत्वमिति शङ्कते- **नन्विति**॥ **सुखेति**॥ तृणादिज्ञानं न तादृगिति भावः।

## भावरत्नकोशः

'तथाऽपि' इति भाष्ये प्रतियोग्याह- **यद्यपीति ॥ उक्तविधया** जीवनाशं देहनाशं वेत्युक्तविधया। 'विकृत' इत्यत्र छेदादिर्विकृतिः। 'छेदभेदादि' इत्यत्रावयवविश्लेषहेतुः क्रिया छेदः। भिन्नतयाऽवस्थानहेतुर्विदारणं भेदः। नेति श्रवणादाह- **एतन्निषेधेति**॥ तथाऽपीति कृतशङ्कानिषेधेत्यर्थः। **श्लोकं** मात्रास्पर्शा इति श्लोकम्। क्वचित्तु श्लोकद्वयमिति पाठः। तत्र **श्लोकद्वयं** 'मात्रास्पर्शास्तु', 'यं हि न व्यथयन्ति' इति श्लोकद्वयमित्यर्थ इत्याहुः ॥ **इति व्याख्यानमिति** ॥ तथा च शङ्करभाष्यम्- 'मात्राः आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि' इति ॥ **पुराणादाविति** ॥ 'जगद्वृक्षाश्रया ह्येषा प्रकृतिश्च गुणत्रयम्। मूलं मात्राश्शिफास्तस्य' इति तात्पर्योदाहृतप्रमाणे 'त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च' 'देहोऽसवोऽक्षा मनवो भूतमात्रा नाऽत्मानमन्यं च विदुः परं यत्' इति भागवतादिपुराण इत्यर्थः । अत्राऽद्ये वचने मात्रा विषया एव ग्राह्याः। 'इन्द्रियाण्यस्य पत्राणि' इति तत्रैवेन्द्रियाणां पृथगुक्तेः। द्वितीये मात्रेन्द्रियाणीति सहपाठात्। तृतीये अक्षाणां मात्राणां च पृथगभिधानात्। अतः

सर्वत्र त एव व्याख्येया इति॥ **रूढत्वादिति**॥ प्रयोगप्राचुर्याद् योगरूढत्वादिति वाऽर्थः। तेन भाष्योक्तयोगवृत्तिविरोध इति शङ्कानवकाशः। मीयन्त इति वदन् भाष्यकारः कर्मणि 'हुयामाश्रुभसिभ्यस्त्रन्' इत्यौणादिकत्रन्प्रत्ययमभिप्रैतीति भावः। 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इति कोषोक्तेराह- **ननु गन्धरसेति**॥ **भिन्नेति**॥ मात्रा इति स्पर्शा इति च भिन्नपदत्व इत्यर्थः॥ **द्वन्द्वत्वेति**॥ मात्राश्च स्पर्शाश्चेति द्वन्द्वत्वे वेत्यर्थः। **स्पर्शानां** त्वगिन्द्रियग्राह्य-गुणविशेषाणाम्। 'विषयान्तर्गतानाम्' इति हेत्वर्थगर्भम्। स्त्रीलिङ्गमात्रापरा-मर्शस्तेषामित्यनेन कथमित्यत आह- **विषयाणामिति**॥ मात्रा विषया इति प्रकृतत्वात् पुल्लिङ्गेन विषयपरामर्शो युक्त इति भावः। **तथाऽपि** तत्पुरुषाश्रयणेन पुनरुक्तिपरिहारेऽपि। **एवं तर्हि** स्पर्शशब्दस्य सम्बन्धार्थत्वे॥ **भिन्नेति**॥ मात्रा इति स्पर्शा इति भिन्नेत्यर्थः। आदिशब्देन द्वन्द्वपरिग्रहः। **दोषाभावात्** 'स्पर्शाभावात्' इत्युक्तदोषाभावात्। वाक्यार्थाघटनदोषाभावाद् वा। **पृथक्** प्रत्येकम्। **एतत् कार्यं** सुखदुःखप्रदानलक्षणं कार्यम्। अनेन भिन्नपदत्वे द्वन्द्वत्वे वा वाक्यार्थानुपपत्तिदोषाभावादित्युक्तमसिद्धमित्युपपादितं भवति॥ **विषय-विशेषेति**॥ त्वगिन्द्रियग्राह्यस्पर्शरूपविषयविशेषेत्यर्थः। **साक्षात्सुख-दुःखे**। विषयसम्बन्धा दद्युरिति वर्तते॥ **कश्चेति**॥ मात्रास्पर्शशब्दितविषय-सम्बन्धानां प्रतिसम्बन्धी कः। सम्बन्धस्य सम्बन्धिद्वयाधीनत्वादिति भावः॥ **कस्मा इति**॥ 'सुखदुःखदाः' इत्यत्र दानस्य सम्प्रदानापेक्षत्वादिति भावः।

ननु न शरीरविषयसन्निकर्षस्य विषयानुभवहेतुत्वं, सुप्त्यादौ व्यभिचारादित्यत आह- **देहशब्देनेति**॥ देहगतत्वं सम्बन्ध इति भावः। ननु शीतोष्णशब्दावित्या-दिना कृतचोद्यस्य भाष्येण कथं परिहार इत्यतस्तदुपपादयितुमाह- **अनेनेति**॥ 'देहे शीतोष्णादि' इति भाष्येणेत्यर्थः। शीतोष्णादीत्यत्राऽऽदिपदसूचितमर्थं वक्तुमाह- **शीतेति**॥ विषयविशेषवचनावपि शीतोष्णशब्दौ गन्धरसादिरूप-सकलविषयसामान्यलक्षकावित्यर्थः। तथाऽप्यनुपपत्तिः। विषयसम्बन्धानां विषयादातृत्वादित्यत उक्तम्- **विषयोक्त्या चेति**॥ सकलविषयलक्षक-

शीतोष्णपदेनेत्यर्थः।* 'तत्साक्षात्कारः' इति वदन् विषयविषयिभावं लक्षणावीजं सम्बन्धमभिसन्धत्ते- **लक्षितलक्षणेति** ।। लक्षितार्थद्वारिका लक्षणा लक्षितलक्षणेत्यर्थः । केचित्तु लक्षिता च सा लक्षणेति कर्मधारयः । लक्षिता लक्षणायुक्ता लक्षणा लक्षितलक्षणा। भवति च शीतोष्णशब्दगता साक्षात्कार-लक्षणा सकलविषयसामान्यलक्षणायुक्तेत्याहुः। कथं च साक्षात् सुखदुःखे इत्युक्तं चोद्यं परिहर्तुं 'ततश्च' इत्यनेन सूचितमर्थमाह- **अनुभवद्वारैवेति** ।। साक्षात्कारद्वारैवेत्यर्थः। कश्च प्रतिसम्बन्धीत्यस्योत्तरमाह- **प्रतिसम्बन्धी देह इति** ।। इन्द्रियाणीत्यर्थः।

ननु विषयेन्द्रियसम्बन्धाः विषयसाक्षात्कारद्वारा सुखादिप्रदा इति न विधिः, काकाऽपि निषेधानुपपत्तेः। नाप्यर्जुनेनाऽशङ्कितस्य निषेधायानुवादः। अर्जुनस्य तत्त्वज्ञानित्वेनैवंविधशङ्कानुदयादित्यत आह- **एतेनेति** ।।** काकुहीनेन मात्रास्पर्शा इत्यर्धेनेत्यर्थः। अनुवादप्रकारं दर्शयन् लक्षितार्थं विशदयति- **तत्तदि-त्यादिना** ।। **प्रकृतशङ्कायाः** 'तथाऽपि तद्दर्शनाभावादिना' इति कृतशङ्कायाः ।। **तुशब्दात् परया काकेति** ।। अवधारणार्थकतुशब्दगतध्वनिविकारेणे-त्यर्थः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इति ह्यभि-धानम्।*** स्वत इत्यनूद्यार्थमाह- **विषयेन्द्रियेति** ।। उक्तरीत्या साक्षात्कार-स्यैव दुःखादिप्रदत्वात् तदनुसारेणाऽह- **विषयसाक्षात्कार इति** ।। दुःख-स्याऽदिर्दुःखादिरिति दुःखसुखहेतुरेवाभिधीयते। यद् वक्ष्यति- 'सुखदुःखहेतुभूतं ज्ञानम्' इति। दुःखमादिर्यस्य सुखस्य तद् दुःखादि। तत्र धर्मो ग्राह्य इति समासद्वयं

* राघवेन्द्रतीर्थीयम्- अनुभव इत्युक्तिलब्धमाह- **तत्साक्षात्कार इति** ।।

** राघवेन्द्रतीर्थीयम्- एवं भाष्यं व्याख्याय मात्रेति मूले पूर्वार्धार्थमाह- **एतेनेति** ।।

***कृष्णाचार्यटिप्पणी- यद्यपि काकुशब्दः शोकादिजन्यध्वनिविकारार्थः। न च विकारस्य तुशब्दात् परत्वं युक्तम्। ध्वनिधर्मत्वात्। तथाऽपि परभाषणजन्य-विकारवद्ध्वनिव्यङ्ग्यः किंशब्दोऽत्र काकुशब्देन ग्राह्यः। तस्य च तुशब्दानन्तर-मध्याहारात् तत्परत्वं युक्तम्। अत एवाग्रे किमित्येतदध्याहृतमिति मन्तव्यम्।।

तन्त्रेणोपात्तमिति भावेन व्याचष्टे- **दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे चेति ॥** गीतानुसारात् स्ववचनानुसाराच्च सुखादिरिति वक्तव्येऽपि यद् भाष्ये 'दुःखादिः' इत्युक्तं तत् सात्त्विकप्रकृतेर्विषयेन्द्रियसम्प्रयोगमन्तरेणापि स्वरूप-सुखमस्तीति नैतदत्र विवक्षितमिति दर्शयितुम्। वैषयिकमेव सुखादिकमत्राभि-संहितमिति न क्षुद्रोपद्रवः। अनेन तुशब्दात् परया काक्का लब्धार्थप्रतिपादनपरेण 'नह्यात्मनः' इति भाष्येणोक्तं भवति 'मात्रास्पर्शाः' इति पूर्वार्धस्य तात्पर्यम्।

ननु 'सर्वाभिमतेरेव' इति भाष्ये अभिमानो ज्ञानमेवेत्युक्तं प्राक्। ज्ञानं च सविषयमेव। तत्र न तावन्मात्रास्पर्शास्तद्विषयाः। अज्ञायमानानामेव तेषां विषयसाक्षात्कारहेतुत्वात्। नापि शीतोष्णादि तद्विषयः। विषयानुभवं प्रति शीतोष्णादिज्ञानस्य हेतुत्वापत्त्या आत्माश्रयापातादित्यतो नात्राभिमानशब्देन ज्ञानमभिप्रेतम्। येनोक्तदोषः। किं नाम? रागादिरेवेत्याह- **अभिमानो नामेति ॥** 'अत्यन्तशोभना एते विषयाः' इति भ्रमनिमित्तको रागोऽभिमानोऽत्र विवक्षित इत्यर्थः। ममतातिशयहेतुकः 'ममैवेदं शरीरम्' 'ममैवेमानीन्द्रियाणि' 'ममैवेदमन्तःकरणं न पुनरन्यस्य' इति भ्रमहेतुकोऽविवेकः। स्फुटतरतत्त्ववि-वेकाभाव इत्यर्थः। आदिपदेन स्वात्मन्यनन्याधीनस्वातन्त्र्यभ्रमो ग्राह्यः, न पुनर्देहात्मैक्यभ्रमः। तस्यान्यत्र निरस्तत्वात्। प्रक्रमानुगुण्याय विषयाभिमान-मात्रे वक्तव्येऽपि शरीराद्यभिमानस्य विषयाभिमानं प्रति हेतुत्वाच्छरीराद्यभि-मानोक्तिः।* **कारणसामग्र्यां** कारणकूटे। 'कुतः' इति भाष्ये हेतुः शङ्कितः। हेतुश्च साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनम्। नचाऽगमापायिन इत्यत्र तादृशी विभक्तिरस्ति। तत् कथं पञ्चम्यन्तत्वेनोत्तरभाष्यमिति शङ्कते- **नन्विति ॥**

---

* कृष्णाचार्यटिप्पणी- अत्र यद्यपि विषयाभिमान एव वक्तव्यः। तस्य रागादि-रूपत्वेन सुखादिप्रयोजकतायाः सर्वसम्मतत्वात्। तथाऽपि देहाद्यभिमानस्तावद् विषयाभिमानहेतुः। इन्द्रियाद्यभिमानाद्धि विषयादिसङ्ग इति तृतीये वक्ष्यमाण-त्वात्। एवमात्माभिमानोऽपि तद्धेतुः। 'स्वातन्त्र्यादिकमविद्यमानमेवोपदर्श्य रागाद्युत्पादनद्वारा ईश्वरो दुःखमनुभावयति' इति सुधोक्तेः। अत उक्ताभिमानस्य विषयाभिमानद्वारा दुःखादिप्रयोजकत्वाद् ग्रहणमिति मन्तव्यम्।

परिहरति- **यत इति** ।। अध्याहारात् हेतुसमर्पकत्वं लभ्यत इत्यनुकृष्यते। अश्रुतपद-कल्पनरूपाध्याहारापेक्षया लक्षणाश्रयणं गुण इति भावेन पक्षान्तरमाह- **प्रयोजनान्तरेति** ।। विशेषणं भवद्धि व्यावृत्तिप्रयोजनकम् । नीलमुत्पलमित्यत्र नीलमित्यस्य अनीलोत्पलव्यावर्तकत्वदर्शनात् । नच प्रकृते अनागमापायिनो मात्रास्पर्शास्सम्भवन्ति। येनास्य सप्रयोजनत्वं स्यात् । अत एव हि 'विशेषणं विशेष्येण बहुलम्' इत्यत्र भेदकं विशेषणमिति वैयाकरणाः । ततोऽस्य विशेषणस्य व्यावृत्तिलक्षणप्रयोजनासंस्पर्शित्वादागमापायित्वादिति यद्धेतुवाक्यं तस्य योऽर्थः साध्यज्ञापनहेतुत्वरूपः तद्गर्भत्वेन लक्षणया तत्प्रतिपादकत्वेनाऽगमापायित्वादिति भाषणं युक्तमिति भावः ।

ननु हेत्वर्थगर्भत्वेऽपि नैतद् विशेषणं भवितुमर्हति। स्पर्शत्वगिन्द्रियसम्बन्धस्य सुप्तावप्यवर्जनीयतया सदा सत्त्वेनासम्भावितत्वादित्यत आह- **सविशेषण इति** ।। सविशेषणे विधिनिषेधौ प्रवर्तमानौ विशेष्ये बाधाद् विशेषणमुपसङ्क्रामतः विशेषणे बाधाद् विशेष्यमिति न्यायस्यायमनुवादः। विशिष्टमात्रास्पर्शानामाग-मापायित्वविधिर्विशेषणे पर्यवस्यतीति दर्शयन् विशेषणतात्पर्यमाह- **शीतोष्ण-सुखदुःखदत्वविशिष्टानामित्यादिना** ।। **अनेन** आगमापायिन इति विशेषणस्य हेत्वर्थगर्भत्वभाषणेन। **उक्तशङ्का** विषयेन्द्रियसन्निकर्षा एवेत्या-दिनोक्तशङ्का।* कारणकोटावभिमानः प्रवेशनीय इत्येतद् भाष्यत एव लभ्यत इति भावेन स्वत इत्यस्य तात्पर्यमाह- **अभिमानमनपेक्ष्येति** ।। सामग्र्यभावात् कार्याभाव इति न वक्तुं शक्यमभिमानो न प्रवेशनीय इति वदता परेणेत्याह-**नहीति** ।। अन्यथा अत्यन्तसंयोगे सत्यपि कदाचित् कार्यानुत्पत्तिप्रसङ्ग इति हृदयम्। 'सुप्तौ' इति वदन् चक्षुरादीन्द्रियव्यापाराभावमभिप्रैति।। **अत एवेति** ।। सुप्तावितरेन्द्रियाणां विषयासम्बन्धेऽपि स्पर्शत्वगिन्द्रियसंस्पर्शस्यानिरसनीयत्वादेव गीतायां शीतोष्णयोः स्वपदेन ग्रहणं कृतमित्यर्थः।। **एतेनेति** ।। स्पर्शत्वगिन्द्रिय-

---

* राघवेन्द्रतीर्थीयम्- शेषोक्त्या भाष्यं व्याचष्टे- **मात्रास्पर्शा इति** ।।

सम्बन्धस्यावर्जनीयत्वकथनेनेत्यर्थः। त्वगिन्द्रियस्य सर्वशरीरव्यापित्वेन शरीर एव मनसस्सत्त्वेन च तयोः सम्बन्धो दुर्निरस इति भावः। नच वाच्यम् 'अणवश्च' इत्यत्रेन्द्रियमात्राणुत्वस्य सूत्रितत्वात् कथं त्वगिन्द्रियस्य शरीरव्यापित्वमिति। तेजसा व्याप्तेस्तत्राप्यभिमतत्वात्।* **॥ आत्ममनस्सन्निकर्षाभाव इति ॥** तथा च न सुप्तौ शीतोष्णसुखदःखदाः कारणाभावादिति भावः।

**॥ मनसः कदाऽप्यात्मवियोगाभावस्येति ॥** नन्वात्मा 'हृदि ह्येषआत्मा' इति श्रुतेर्हृदयदेशस्थः। मनस्तु 'ता एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' इति श्रुतेः शिरोदेशस्थम्। तत् कथं दूरस्थयोर्वियोगाभाव इति चेन्न। मनसोऽपि हृदयदेशस्थत्वेनावियोगसम्भवात्। तथा च श्रुतिः- 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति। ऋग्भाष्यटीका च 'हृदये मनसः प्राचुर्येण वृत्तेः' इति। तथा च हरिवंशेषु- 'देहस्य मध्ये हृदयं स्थानं तु मनसः स्मृतम्' इति। नचैवं शिरःस्थत्वश्रुतिविरोध इति वाच्यम्। मनसो रश्मिविशेषेण दक्षिणाक्षिस्थत्वस्य शास्त्रसिद्धत्वेन तच्छ्रुतिसम्भवात्। स्वप्नकाले कण्ठदेशे सन्निधानविशेषाङ्गीकारेण तत्स्थत्वश्रुतिविसंवादस्याप्यभावात्। नन्विदं पूर्वग्रन्थ-विरुद्धम्। तत्र 'समश्चाभिमानो मनसि' इति भाष्यव्याख्यानावसरे 'तदा तस्य मनसा सन्निकर्षाभावात्' इत्युक्तत्वादिति चेत्, अत्र केचित् अनुपरत-मनसस्सन्निकर्ष एव ज्ञानहेतुः। स्वापे तु मन उपरतम्। तथा च अनुपरतमनसा सन्निकर्षाभावः पूर्वटीकावाक्यार्थः। अत्र तु आत्ममनसोरवियोगकथनं वस्तुस्थितिप्रदर्शनपरम्। 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इत्यष्टमा-ध्यायभाष्ये **॥ वक्ष्यमाणप्रमाणसिद्धत्वादिति ॥** अन्ये तु पूर्वटीका परमतानु-वादः, इयं तु 'यत्र प्राणः' इति मानसिद्धत्वात् स्वमतमित्यविरोध इत्याहुः।

---

*राघवेन्द्रतीर्थीयम्- **एतेन** शीतोष्णरूपत्वगिन्द्रियविषयग्रहणेनेत्यर्थः। त्वगि-न्द्रियस्य बहिरन्तर्व्यापित्वेन मनस्संयोगस्याप्यवश्यम्भावित्वादिति भावः।

***अतिप्रसङ्गस्य** यद्यात्मनः स्वतः स्युः सुप्तावपि स्युरिति तर्कस्य ॥ **भवन्तीति सबन्ध इति** ॥ 'सन्ति' इति भाष्यपदस्य भवन्तीति व्याख्यास्यमानत्वात् तदभिप्रायेणैवमुक्तिः ॥ **तदित्यभिमानेति** ॥ स्वत इत्यत्राभिमानस्याभिसंहितत्वेन बुद्धौ विपरिवृत्तेस्तच्छब्देन परामर्शो युक्त इति भावः। स निमित्तं सुखादिदाने येषां मात्रास्पर्शानां ते तथोक्ता इति विग्रहमभिप्रेत्य तत्तात्पर्यमाह- **तेन निमित्तेनेति** ॥ तत् अभिमानसहितानामेव सुखादिदानम्। आदिपदार्थं वदंस्तत्तात्पर्यमाह- **जाग्रत्स्वप्नयोरभिमानवतोरिति** ॥ 'ते' इत्यनूद्यार्थमाह- **ते तथाविधा इति** ॥ तद्विवरणम्- **शीतेति** ॥ अभिमानसहितास्सन्त इति वाऽर्थः॥ **सुप्त्यादाविति** ॥ सुप्तिमोहासम्प्रज्ञातसमाधिष्वित्यर्थः। दाप्रत्ययस्य कालेऽनुशासनेऽप्यत्र कालोपलक्षितावस्था ग्राह्येतीयमुक्तिः।

अन्वयव्यतिरेकावुक्तौ। तत्र व्यतिरेको नास्तीति शङ्कते- **नन्विति** ॥ ज्ञानमात्रस्यान्वयव्यतिरेकाभ्यामभिमानकारणकत्वं मत्वा चेयं शङ्का॥ **अधिकृतमिति** ॥ शीतोष्णशब्दे लक्षितलक्षणाङ्गीकारेण विषयसाक्षात्कारग्रहणात् प्रकृतमित्यर्थः। नन्वेवं सुप्त्यादावपि तृणादिज्ञानं स्यादेव। तत्र अभिमानाभावेन सुखादिहेतुभूतविषयानुभवानङ्गीकारेऽपि उदासीनतृणादिज्ञाने प्रतिबन्धाभावात्। विषयेन्द्रियसम्बन्धस्येन्द्रियमनस्सन्निकर्षस्याऽत्ममनस्संयोगस्य वाऽभावेन न तृणादिविषयानुभव इति तु पूर्वटीकयैव परिहृतमिति चेत्, उच्यते। विषयेष्वत्यन्तशोभनाध्यासनिमित्तस्नेहादिलक्षणस्य शरीरेन्द्रियान्तःकरणेषु ममतातिशय-

---

* कृष्णाचार्यटिप्पणी- मनसो रश्मिविशेषेणाऽत्मदक्षिणाक्षिसन्निहितत्वाच्छिरस्स्थत्वश्रुतिरप्युपपद्यते। एतेन 'कण्ठस्थानागमो यदा' इत्युक्तेः कण्ठस्थस्य तैजसस्य 'मनस्यन्तस्तु तैजसः' इति श्रुतिविरोधपरिहाराय मन्दिरे मणिमालेतिवत् कण्ठे मनस्तत्र तैजस इत्येवं कण्ठस्थितमनस्स्थत्वं कल्पनीयम्। ततश्च मनसो हृदयस्थत्वे उक्तश्रुतार्थापत्तिविरोध इत्यपास्तम्। स्वप्नकाले मनसः कण्ठे सन्निधानविशेषाङ्गीकारात्।

राघवेन्द्रतीर्थीयम्- **केवलाः** अभिमानेन विना कृता इत्यर्थः।

हेतुकाविवेकरूपस्य स्वात्मन्यनन्याधीनस्वातन्त्र्यभ्रमरूपस्य च त्रिरूपस्याप्यभिमानस्य सुखदुःखहेतुसाक्षात्कारजनकता। विषयाभिमानान्यस्य शरीरेन्द्रियाद्युक्तलक्षणस्य मानसज्ञानसामान्यहेतुताऽभिमता । एवं च सुप्तावुक्तलक्षणस्य विषयाभिमानान्यस्याभिमानस्याभावेन सामग्र्यभावात् तत्र तृणाद्युदासीनज्ञानाभावो युक्तः । 'अभिमानहीनेऽपि' इति टीकायां विषयाभिमान एव त्याजितः । न त्वितरः । पूर्वोत्तरग्रन्थपर्यालोचनायां तथा प्रतीतेः । फलबलेनैवं कल्पनेति ।

केचित्तु, सुप्तौ तृणादिज्ञानसामग्री यद्यपि टीकोक्तरीत्याऽस्ति । तथाऽपि सा सामग्री सुप्त्या प्रतिबद्धा कल्प्यते । मानसं हि ज्ञानं तत्राऽपादनीयम् । मनस्तूपरतं तदेत्यप्रतिबद्धसामग्र्यभाव इत्याहुः । तन्न । 'न हि कारणसामग्री कार्यं व्यभिचरति' इत्यादिग्रन्थास्वारस्यात् । करणसामग्र्याः प्रतिबन्धादेव सुप्तौ तदापादनानुपपत्तेः । अभिमानस्य कारणकोटौ निवेशो वक्तव्य इति सिद्धान्तासिद्ध्यापाताच्चेति ।*

---

ताम्रपर्णीयम्- 'अतो यतो मात्रास्पर्शा जाग्रदादावेव ते सन्ति' इत्यत्र टीका- 'नन्वेवं अभिमानहीनेऽपि ज्ञानोत्पत्तिस्तृणादौ दृश्यते । सत्यं सुखदुःखहेतुभूतं ज्ञानमत्राधिकृतमित्यदोषः' इति ॥ शोभनत्वाध्यासनिमित्तस्नेहारित्वाध्यासनिमित्तद्वेषलक्षणाभिमानरहितेऽत्युदासीने तृणादावपि ज्ञानोत्पत्तिर्दृश्यते। कथमभिमानाभावे शीतोष्णोपलक्षितज्ञानाभावः? व्यतिरेकव्यभिचारादिति चेत्, उच्यते। सुखदुःखहेतुभूतज्ञानस्योत्पत्तावुक्तविधो विषयाभिमानः शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकाविवेकलक्षणः करणाभिमानश्चेति द्वयं कारणम्। तत्र तृणादौ विषयाभिमानाभावेन सुखदुःखहेतुभूतज्ञानानुत्पत्तावपि करणाभिमानवशेन ज्ञानमात्रोत्पत्तिर्युक्ता। सुखदुःखहेतुभूतज्ञानस्योभयान्वयव्यतिरेकानुविधायित्वम् इह प्रकृतम्। तत्र विषयाभिमानराहित्येऽपि ज्ञानोत्पत्तिदर्शनाद् व्यतिरेकव्यभिचारचोदनमयुक्तमिति भावः।

ननु सुधायां 'कार्यजातं धर्माधर्माभ्यामुपजायत इति तावदविवादम्। ततश्च

अनुवृत्तम्...

भाष्यम्

आत्मनश्च तैः विषयविषयिभावसम्बन्धादन्यः[1] सम्बन्धो नास्ति। नचाऽगमापायित्वेऽपि प्रवाहरूपेणापि[2] नित्यत्वमस्ति। सुप्तिप्रलयादावभावादित्याह- **अनित्या इति ॥**

---

अनुवर्तते

धर्माधर्माभ्यामुपजातं तृणादिदर्शनं स्वयमसुखदुःखात्मकं यदि सुखं दुःखं वा तत्साधनं वा न जनयेत् तदा धर्माधर्मयोर्वैयर्थ्यमेव। श्रुत्यादेश्चाप्रामाण्यमापद्यते। ततस्तृणादिदर्शनेनापि सुखदुःखादिकं किञ्चिदुपजनयितव्यम् । सत्यम् । तृणादिदर्शनस्य फलं सर्वथाऽप्यव्यक्तमिति न दोषः' इति तृणादिदर्शनस्य फलोक्तेः कथं तस्य सुखदुःखहेतुत्वाभाव इति चेत्, व्यक्तफलस्य विषयाभिमानकार्यत्वाभ्युपगमेनाव्यक्तस्य तदभावेऽप्युपपत्तेरित्यस्य पठितसुधात एवावगमात्। अत एवोक्तम्- 'तृणादिदर्शने किञ्चित् फलवत्त्वं निगद्यते' इति युक्तिपादीयानुव्याख्याने।

ननु सुखदुःखादिरूपं फलं ज्ञातैकसत्। कथम् अव्यक्तं फलं तृणादिदर्शनस्येति चेत्, न तृणादिदर्शनं साक्षात् सुखदुःखे जनयति। तथा सत्युदासीनज्ञानत्वायोगात् । किन्तु तृणादिकमीश्वररचितमित्येवमाकारेण यदि ज्ञातं तदा धर्ममापादयति। यदीश्वरकार्यत्वानवगाहि न तदा धर्ममिति तृणादिदर्शनजन्याभ्यां धर्माधर्माभ्यां काले सुखदुःखे। तथा च दर्शनफलस्य धर्मादिरतीन्द्रियत्वात् तत्फलस्य सुखादेस्तदानीमव्यक्तत्वाददोषः।

ननु सम्प्रज्ञातसमाधियुक्तानामभिमानोऽस्ति न वा। आद्ये समाध्ययोगः। द्वितीये जगज्ज्ञानायोग इति चेन्न। अस्त्येव तेषां द्विविधोऽभिमानः ईशदत्तस्वाम्यबुद्धिलक्षणः। अतो न दोषः।

---

१. ब. विषयविषयिसम्बन्धादन्यः। २. ब. प्रवाहरूपत्वेन।

अत आत्मनो देहाद्यात्मभ्रम एव [1]सुखदुःखकारणम्। अतस्तद्विमुक्तस्य बन्धुमरणादिदुःखं न भवति। अतोऽभिमानं परित्यज्य तान् शीतोष्णादीन् तितिक्षस्व ॥ १४ ॥

प्रमेयदीपिका

इतश्चाभिमान एवाऽत्मन उपप्लव इत्याह- **आत्मनश्चेति** ॥ अत्र तैरिति ज्ञानसुखदुःखपरामर्शः। आत्मनो ज्ञानादिभिः सम्बन्धो नास्ति। तेषां मनोवृत्तित्वात्। तथाचान्यगतधर्माः कथमन्यस्य विक्रियाहेतवो, विनाऽभिमानात्। प्रसिद्धं च स्वाभिमतगृहदाहो देवदत्तं दुःखा(खी)करोतीति। ज्ञानादिभिरात्मनः सम्बन्धाभावे कथमुक्तं शीतोष्णाद्यनुभव आत्मन इत्यादीत्यत उक्तम्- **विषयेति** ॥ मनोवृत्तिरूपाणि ज्ञानादीनि विषयभूतानि। आत्मा च विषयी। साक्षिचैतन्यस्य तद्विषयत्वात्। एतमेव सम्बन्धमभिप्रेत्याऽत्मनो ज्ञानमित्यादिव्यवहारः। उपलक्षणं चैतत्। ईश्वराधीनं स्वामित्वमपि ग्राह्यम्। तादात्म्यसमवायनिरासे तात्पर्यात्।

नन्वभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं, न केवलानामित्युपपादितमेतत्। ततोऽनित्या इति व्यर्थमिति चेन्न। आगमापायित्वस्यैवानेन व्याख्यानात्। व्याख्यानेऽपि किं प्रयोजनमित्यत आह- **नचेति** ॥ आगमापायिशब्दो द्वयोः प्रयुज्यते। यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यम्। यथा गङ्गोदकम्। तदेकमागमापायीत्युच्यते। यस्य तु प्रवाहोऽपि विच्छिद्यते, यथा किंशुककुसुमानां, तदपरमिति। तत्राऽगमापायिशब्दादुभयप्रतीतौ आगमापायित्वेऽपि, आगमापायिशब्दार्थत्वेऽपि यत् प्रवाहरूपेण नित्यत्वं तदत्र विवक्षितं नास्ति न भवति। मात्रास्पर्शानां शीतोष्णसुखदुःख-

१. ब. सुखशब्दो न पठ्यते।

दत्वे तदसम्भवात्। प्रकृतानुपयोगाच्च। किन्तु द्वितीयमेव। सुस्यादावभावेन सम्भवादुक्तरीत्या प्रकृतोपयोगादित्येतदनित्या इत्यनेनाऽऽह भगवानित्यर्थः। प्रलयो मूर्च्छा। आदिपदेनासम्प्रज्ञातसमाधेर्ग्रहणम्। नन्वनित्यपदमप्यनेकार्थमेव। सत्यम्। तथाऽपि पुनः प्रयत्नाद्यालोचनादेतत्सिद्धिः। एतदपि विशेषणोपसंक्रातं विशेषणम्। आगामिव्याख्यानमपेक्ष्य भाष्यकृताऽयमर्थः प्रागुपन्यस्त इति ज्ञेयम्।

उक्तमर्थं पिण्डीकृत्योपसंहरति- **अत इति**॥ उक्तप्रकारेण देहादावात्मनो ममैवैतद् इत्यादिभ्रम एव। भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः। ततः किमित्यतः चतुर्थपादं व्याख्यातुमुपोद्घातमाह- **अत इति**॥ तद्विमुक्तस्य भ्रमविमुक्तस्य। बन्धुमरणादिदुःखं यत् प्राक् शङ्कितम्। नहि सामग्रीकार्यमेकदेशेन भवतीति भावः। ततः किमित्यतः चतुर्थपादं व्याख्याति- **अत इति**॥ तितिक्षस्व विफलीकुर्विति भावः। ननु तानिति मात्रास्पर्शानां परामर्शो युक्तः। तत् कथं 'शीतोष्णादीन्' इत्युक्तम्। मैवम्। शीतोष्णादिहेतूनां मात्रास्पर्शानामेव तच्छब्देनोपलक्षणात्। ॥ १४ ॥

## भावदीपिका

॥ उपप्लव इति॥ ज्ञानद्वारा दुःखादिपीडाहेतुरित्यर्थः। ननु सम्बन्धाभावेऽपि विक्रियाहेतवः कथं स्युरित्यत आह - **तथा चेति**॥

ननु अभिमानस्यापि दुःखाद्याकारेण परिणामरूपविक्रियाहेतुत्वं कुत इत्यत आह - **प्रसिद्धं चेति**॥ **स्वाभिमतगृहेति**॥ स्वकीयाभिमानविषयगृह इत्यर्थः ॥ **दुःखीकरोतीति** ॥ अभूततद्भावे, 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः'। सम्पद्यतेर्धातोर्यःकर्ता तद्वाचिनः शब्दात् च्विप्रत्ययो भवति। कृञ् करणे भू सत्तायामस भुवीत्येतैर्धातुभिर्योगे अतथाभूतस्य तथाभावे गम्ये 'अस्य च्वौ'

अवर्णस्य ईत् स्यात्, च्वौ परेऽव्ययत्वं च। अकृष्णः कृष्णः सम्पद्यते तं करोति कृष्णीकरोति। अब्रह्म ब्रह्म सम्पद्यते तद्भवति ब्रह्मीभवति। अगर्गो गर्गः सम्पद्यते सोऽस्ति गर्गीस्यादित्युदाहरणम्। एवं प्रकृतेऽपि। दुःखशब्दात् च्विप्रत्यये तस्य सर्वस्य लोपे च्वौ परे अकारस्य ईत्वे च्व्यन्तत्वादव्ययत्वे दुःखीति भवति। तथा चादुःखो दुःखः सम्पद्यते तं करोतीति दुःखीकरोतीत्यर्थः। गृहदाहो देवदत्तं दुःखीकरोतीत्युदाहरणम्। दुःखाकरोतीत्यपि पाठः साधीयानेव। 'दुःखात् प्रातिलोम्ये' प्रातिलोम्यं चित्तपीडा। दुःखशब्दात् प्रातिलोम्ये विवक्षिते डाच्प्रत्ययो भवति। दुःखाकरोति स्वामिनं भृत्यः। तच्चित्तं पीडयतीत्यर्थः। एवं गृहदाहो देवदत्तं दुःखाकरोति तच्चित्तं पीडयतीत्यर्थः। दुःखशब्दात् प्रातिलोम्ये विवक्षिते डाचि डकारचकारयोर्लोपे, आकारमात्रे उर्वरिते खकारस्थस्याकारस्य भस्य लोपे दुःख् आ दुःखेति रूपम्। ततश्च दुःखाकरोतीति युक्तमिति ध्येयम्॥

॥ **अनुभव आत्मन इति** ॥ षष्ठ्यर्थस्य सम्बन्धगर्भत्वादिति भावः। 'इत्यादि' इत्यादिपदेन आत्मनः सुखदुःखे आत्मनो दुःखादिरित्यस्य ग्रहणम्। नन्वात्मनो विषयत्वात् कथं विषयित्वमित्यत आह- **साक्षीति**॥ चेतनस्य ज्ञानवतो भावश्चैतन्यं ज्ञानम्। तथा च साक्षिरूपज्ञानस्येत्यर्थः॥ **तद्विषयत्वादिति** ॥ ज्ञानादिविषयकत्वाद् विषयित्वं युक्तमिति भावः ॥ **एतमेवेति** ॥ विषयविषयिभावमेवेत्यर्थः। नन्वेवं तर्हि अन्यः सम्बन्धो नास्तीत्ययुक्तम्। अभिमानद्वारकविषयविषयिभावसम्बन्धान्यस्य स्वस्वामिभावसम्बन्धस्य सत्त्वादित्यत आह- **तादात्म्येति** ॥ अयं भावः। अत्र ह्यात्मनोऽभिमानव्यतिरिक्तो ज्ञानसुखदुःखादिरूपविकारकारणीभूतः सम्बन्धो निराक्रियते। तत्र तार्किकरीत्या ज्ञानादीनामात्मधर्मत्वात् तेषां चाऽत्मना समवायसम्बन्धाङ्गीकारात् तस्यैव विकारहेतुत्वमस्तु। किमभिमानद्वारकसम्बन्धेनेति शङ्कायां तत्सद्भावे मानाभावेन तस्य विकारहेतुता नास्तीति समवायनिराकरणे

तात्पर्यम् । मीमांसकरीत्या ज्ञानादीनामात्माभिन्नत्वेन तादात्म्यरूपसम्बद्ध-स्यैवाऽत्मनो ज्ञानादिविकारहेतुत्वमस्तु किमभिमानेनेति शङ्कायां चेतनस्याऽत्मनो दुःखाद्यचेतनाकारेण परिणामासम्भवेन न तस्य विक्रियाहेतुत्वमिति तादात्म्य-निरासे तात्पर्यं न तु स्वामित्वनिरास इति न दोषः । तथा च विषयविषयिभाव-सम्बन्धादन्य इत्यत्र तादात्म्यसमवायावेव निषेध्यतया ग्राह्यावित्यर्थः ॥ **मात्रा-स्पर्शानामिति** ॥ तस्य मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वस्यासम्भवात् प्रवाहरूपेण नित्यत्वासम्भवादित्यर्थः । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं न प्रवाहतो नित्यम् । तथात्वे मात्रास्पर्शानां शीतोष्णादिदत्वप्रसङ्गात् । ओमिति चेन्न । सुप्त्यादावभावादिति भावः ॥ **प्रकृतेति** ॥ ज्ञानादिकारणसामग्र्यां मात्रा-स्पर्शरूपायामभिमानस्य निवेशनरूपं यत् प्रकृतं तदुपपादकत्वं नास्ति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वप्रवाहनित्यत्वस्येत्यर्थः । शीतोष्णसुख-दुःखदत्वस्य प्रवाहतो नित्यत्वेऽपि अभिमानरहितानामेव मात्रास्पर्शानामनुभव-द्वारा सुखादिदत्वसम्भवेनाप्रयोजकत्वादिति भावः ॥ **सुप्त्यादाविति** ॥ सुप्त्यादौ मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वाभावेन मात्रास्पर्शानां सुखदुःखदत्वस्य स्वरूपतोऽनित्यत्वसम्भवादिति भावः ॥ **उक्तरीत्येति** ॥ मात्रास्पर्शानां सुखदुःखदत्वस्य नित्यत्वे तु केवलानां विषयेन्द्रियसम्बन्धानां सुखदुःखदत्वे तेषां सुप्त्यादावपि सत्त्वेन सुखदुःखदत्वाभावेन व्यभिचारापत्त्याऽभिमान-सहितानामेव तेषां सुखादिदत्वमित्येवमभिमानस्य कारणसामग्र्यां प्रवेशनरूप-प्रकृतोपयोगादित्यर्थः ।

ननु केवलानामेव मात्रास्पर्शानां सुखदुःखदत्वे प्रलयादावपि तेषां सत्त्वेऽपि सुखदुःखदत्वाभावेन व्यभिचारापत्त्या तावन्मात्रस्य कारणत्वासम्भवादभि-मानसहितानामेव कारणत्वमित्युक्तम् । तदयुक्तम् । प्रलये देहाद्यभावेन मात्रास्पर्शानामसत्त्वेनैव सुखाद्यभावसम्भवेन सुखाद्यभावस्याभिमानाभाव-

प्रयुक्तत्वाभावाद् इत्यतः प्रलयपदं व्याख्याति - **प्रलयो मूर्च्छेति** ॥ आगमापायिशब्दस्यानेकार्थत्वात् तत्पदानिवर्त्यशङ्कानिरासाय 'अनित्याः' इत्युक्तमित्युक्तम् । तदयुक्तम् । अनित्यशब्दस्यापि आगमापायिशब्दो द्वयोः प्रयुज्यते इत्युक्तरीत्या यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं तदेकमनित्यम् । यस्य प्रवाहोऽपि विच्छिद्यते तदपरमनित्यमिति सम्भवेन व्याख्यानेऽपि किं प्रयोजनमित्युक्तशङ्काया अनिवारणादिति भावेन शङ्कते - **नन्विति** ॥ **पुनः प्रयत्नादीति** ॥ 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायात् 'व्यर्थं सत् किञ्चिज्ज्ञापयति' इति न्यायाद्वेत्यर्थः । यद्यप्यागमापायिपदेन 'न चाऽगमापायित्वेऽपि प्रवाहरूपेण' इत्युक्तप्रयोजनस्यानित्यपदेनाप्यलाभाद् व्यर्थमेवानित्यपदं, तथाऽपि प्रयुक्तम् । तेन ज्ञायते न चेत्युक्ताभिप्रायेण आगमापायिपदव्याख्यानरूपमेवानित्यपदमिति ॥ **एतदपीति** ॥ न केवलमागमापायित्वं, किन्त्वेतदनित्यत्वमपि मात्रास्पर्शानां यच्छीतोष्णसुखदुःखदत्वरूपं विशेषणं तदुपसङ्क्रामतीत्यर्थः ।

नन्वेवं सति आगमापायिशब्दः सुप्त्यादौ प्रवाहविच्छेदादिपरत्वेन गीतायामेवानित्या इति पदेन व्याख्यातो भाष्यकारैरतो यत इत्यादिना पूर्वमेव कस्माद् व्याख्यात इत्यत आह- **आगामीति** ॥ गीतायामनित्या इति पदेन करिष्यमाणेत्यर्थः ॥ **भ्रम एवेति** ॥ विषयेषु शोभनत्वभ्रमनिमित्तकस्नेहरूपः अरित्वादिभ्रमनिमित्तद्वेषरूपश्च योऽभिमानः स एवात्र भ्रमशब्देन गृह्यते । निमित्तेन नैमित्तिकोपलक्षणात् । अन्यथाऽभिमानसाहित्यस्यैव पूर्वमुक्तत्वेनात्र भ्रमसाहित्योक्तौ तद्विरोधापत्तेरिति ध्येयम् ॥ **प्राक् शङ्कितमिति** ॥ तथाऽपि तद्दर्शनाभावादिनेत्यनेनेत्यर्थः ।

नन्वभिमानविमुक्तस्य मात्रास्पर्शमात्रेणैव बन्धुमरणादिदुःखं कस्मान्न स्यादित्यत आह- **न हीति** ॥ दुःखादीनामभिमानसहितमात्रास्पर्शरूपसामग्रीकार्यत्वादभिमानरहितमात्रास्पर्शरूपसामग्र्यैकदेशमात्रेणेत्यनुपपत्तेः ।

दण्डमात्रेण घटोत्पत्त्यदर्शनादित्यर्थः ॥ **युक्त इति** ॥ कारणानामेव विफलीकरणमुचितं न तु कार्याणाम्। अतः कारणीभूतमात्रास्पर्शानामेव विफलीकरणे वक्तव्ये तत्कार्याणां शीतोष्णाद्यनुभवसुखादीनां तत्कथनमयुक्तमिति भावः। शीतोष्णादिहेतूनाम्। तदनुभवहेतूनां शीतोष्णादीनीति शब्देनेत्यर्थः। लक्षणाबीजसम्बन्धोपपादनाय 'शीतोष्णादिहेतूनाम्' इत्युक्तमिति द्रष्टव्यम्॥ १४॥

## भावरत्नकोशः

भाष्ये चशब्दः किञ्चेत्यर्थ इति भावेनाऽह- **इतश्चेति** ॥ **उपप्लवः** विक्रियाहेतुः। 'तैः' इत्यत्र न तावदभिमानपरामर्शः, आत्मना सह तस्य विषयविषयिभावानुपपत्तेः। बहुवचनायोगाच्च। नापि मात्रास्पर्शपरामर्शः। तैस्सहाऽत्मनो विषयविषयिभावानुपपत्तेरित्यत आह- **अत्र तैरितीति** ॥ शीतोष्णपदेन तत्साक्षात्कारलक्षणाभिप्रायेणोक्तम्- **ज्ञानेति** ॥ **ज्ञानादिभिः** ज्ञानसुखदुःखैः। 'एतत्सर्वं मन एव' इति श्रुतेराह- **मनोवृत्तित्वादिति** ॥ **अन्यगताः** मनोगताः। **अन्यस्य** आत्मनः। **विक्रिया** नीचोच्चतालक्षणा। सत्यप्यभिमाने कथमन्यधर्मोऽन्यं विकुर्यादित्यत उपपादयति- **प्रसिद्धं चेति** ॥ अभिमान एवाऽत्मन उपप्लव इति स्फोरणाय 'स्वाभिमत' इत्युक्तम्। अन्यदीयगृहदाहस्यातथात्वनुभवादिति भावः।*

---

* ताम्रपर्णीयम्- 'आत्मनश्च तैर्विषयविषयिभावादन्यः सम्बन्धो नास्ति' इत्यत्र 'अन्यगतधर्माः कथम् अन्यस्य विक्रियाहेतवो विनाऽभिमानात्' इति टीका। नन्वभिमानोऽपि विषयेषु शोभनत्वाध्यासनिमित्तक इति प्रागुक्तरीत्या भ्रमनिमित्तकस्नेहद्वेषादिरूपो मनोवृत्तिविशेष एव। सोऽपि कथम् अन्यत्र जीवचैतन्ये विक्रियां दद्यात्। प्रत्युत विषयज्ञानसुखदुःखानां नीचोच्चताविक्रियाहेतुत्वं युक्तम्। अव्यवहितत्वादिति चेत्, नात्र विषयाभिमानकरणाभिमानयोः सुखदुःखसहायतया विक्रियाहेतुत्वमुच्यते। किन्तु शीतोष्णसुखदुःखेषु साक्षिणा

अनुवृत्तम्...

**॥ दुःखाकरोतीति ॥** 'दुःखात् प्रातिलोम्ये' इति दुःखपदस्य कृञा योगे डाच्प्रत्ययः । पीडयतीत्यर्थः । आत्मन इति षष्ठ्याऽनुभवस्यैवाऽत्मसम्बन्धित्वं प्रतीयत इति न मन्तव्यमिति भावेनाऽदीत्युक्तम् । 'ततश्च सुखदुःखे' इति भाष्यमादिपदार्थः **॥ तद्विषयत्वादिति ॥** मनोवृत्तिरूपज्ञानादिविषयकत्वादित्यर्थः । तथा च पद्धतौ- 'मनस्तद्वृत्तयः कालोऽव्याकृताकाशश्चेत्याद्याः साक्षिणो विषयाः' इति । उक्तं भाष्यविसंवादमुद्धरति- **एतमेवेति ॥** विषयविषयिभावम् **॥ स्वामित्वमिति ॥** स्वस्वामिभावसम्बन्धोऽपि । आत्मनोऽनुभव इत्यादिव्यवहारप्रयोजकत्वादिति भावः । एवं तर्हि कोऽयं व्यावर्त्यः सम्बन्ध इत्यत आह- **तादात्म्येति ॥** आत्मनो मनोवृत्तिरूपैर्ज्ञानादिभिर्न तादात्म्यम् । चेतनस्याचेतनज्ञानाद्यात्मकत्वायोगात् । नापि समवायः । तस्य स्वरूपत एवाप्रामाणिकत्वादित्येवं सम्बन्धद्वयस्य विक्रियाहेतुत्वेन पराभ्युगतस्य निरासे नान्य इति भाष्यस्य तात्पर्यान्नोक्तविरोध इति भावः **॥ इत्युपपादितमेतदिति ॥** मात्रास्पर्शा एव केवलाः शीतोष्णसुखदुःखदा न हि । किं नाम? अभिमानसहिता एवेति 'मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।' इत्यर्धेनोक्ते शङ्कोन्मिषति विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः, येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इति । सेयमागमापायिन इत्यनेन गीतायां

---

अनुवर्तते

विषयीकृतेषु सत्सु अनात्मीयेष्वात्मीयत्वज्ञानरूपफलाभिमान एव नीचोच्चतारूपविक्रियाहेतुः । फलज्ञानमात्रस्यैवोच्चतादिहेतुत्वे परकीयेऽपि सुखे बुद्ध्या उच्चतादिरूपविक्रियोत्पादापत्तेः । न च फलाभिमानोऽपि भ्रमरूप एवेति मनोवृत्तिविशेष एव । स कथमन्यत्र विक्रियाहेतुरिति वाच्यम् । साक्षिणा सुखादिबोधानन्तरं तस्येशदत्ते स्वाम्ये सत्यपि तदवरुध्य केवलं तत्र स्वामित्वभ्रमं मनो जनयति । तस्मिंश्च भ्रमे धर्म्युपनायकत्वं साक्षिणः । सति चैवं चैतन्यसहकारेणायं जायमानो भ्रमश्चैतन्य एवाभिमानशब्दितभ्रममेव विकारमासञ्जयति । स चाभिमानो नीचोच्चतारूपविकारहेतुरिति सर्वमनवद्यम् ॥

परिहृता। तत्परिहारप्रकारश्च 'कुतः? आगमापायित्वात्' इत्यादिना 'अन्यः सम्बन्धो नास्ति' इत्यन्तेन ग्रन्थेन भाष्यकृतोपपादितमित्यर्थः। **ततः** पूर्वविशेषणेन शङ्कायाः परिहृतत्वात्। **व्यक्तिरूपेण** प्रवाहित्वेन। 'आगमापायित्वेऽपि' इति भाष्यपदमनूद्यार्थमाह- **आगमापायिशब्दार्थत्वेऽपीति ॥**

नन्वागमापायिनामपि कालांशक्षणलवादीनां प्रवाहरूपेण नित्यत्वमस्तीति कथं नास्तीति भाषणमित्याशङ्क्योक्तम्- **तदत्र विवक्षितं न भवतीति ॥** न हि वयं प्रवाहेण नित्यं वस्तु नास्तीति ब्रूमः। येनोक्तदोषः। किन्तु शीतोष्णसाक्षात्कारजन्यसुखादेः प्रवाहरूपेण न नित्यत्वमभ्युपगन्तुं शक्यत इति वदाम इत्यर्थः। तत्कुत इत्यत आह- **मात्रास्पर्शानामिति ॥** सुप्त्यादौ सुखदुःखप्रवाहविच्छेदेन प्रवाहनित्यत्वस्यासम्भवादित्यर्थः॥ **प्रकृतेति ॥** आगमापायिन इति विशेषणं हि प्रकृतस्य अभिमानोऽप्यन्वयव्यतिरेकाभ्यां करणसामग्र्यां निवेशनीय इति प्रमेयस्य समर्थनाय प्राप्तम्। तत्र यदि प्रवाहतो नित्यत्वं तच्छब्दार्थतयाऽभिमतं स्यात् तर्ह्युक्तप्रमेयेऽनुपयोगः स्यादित्यर्थः। मात्रास्पर्शानामेव विषयानुभवजननद्वारा सुखदुःखादिप्रदत्वस्य प्रवाहरूपेण नित्यत्वे सुप्तौ व्यभिचारोक्त्ययोगाद् अभिमानव्यतिरेके ज्ञानादिव्यतिरेक इत्यस्यानेनासमर्थनादिति भावः। द्वितीयं किंशुककुसुमानामिव प्रवाहविच्छेदरूपमागमापायित्वं विवक्षितमिति योज्यम्। **अभावेन** प्रवाहस्य। **उक्तरीत्या** 'जाग्रदादावेव ते सन्ति नान्यदा' इत्यादिभाष्योक्तरीत्या। व्यक्तिरूपेण नित्यत्वं तु न कस्यापि सम्मतमिति भाष्ये 'प्रवाहरूपेणापि' इत्यपिशब्दः। अभिमानेन विना कृतानां मात्रास्पर्शानां ज्ञानादिहेतुत्वं न भवति। प्रलये व्यभिचारादिति भाष्याभिप्रेतमयुक्तम्। महाप्रलये मात्रास्पर्शानामेवाभावादित्यतो व्याचष्टे- **प्रलयो मूर्छेति ॥***

---

* ताम्रपर्णीयम्- 'न चाऽगमापायित्वेऽपि प्रवाहरूपेणापि नित्यत्वमस्ति। सुप्तिप्रलयादौ' इत्यत्र 'प्रलयो मूर्छा' इति टीका। ननु मूर्छायां दुःखानुभवाद् अभिमानाभावे कथमनुभव इति चेन्न। ततः पूर्वमेवाभिमानसहितविषयसम्बन्धेन जातं दुःखं

अनुवृत्तम्...

॥ **असम्प्रज्ञातेति** ॥ न विद्यते सम्प्रज्ञातं सम्प्रज्ञानं बाह्यार्थज्ञानं यस्मिन् सोऽयमसम्प्रज्ञातः समाधिः । आगमापायिशब्दादुभयप्रतीतावेकतरनिर्धारणायानित्यपदं व्याख्यानरूपमित्युक्तम् । अनित्यपदस्यापि गङ्गोदके किंशुककुसुमे च प्रयोगदर्शनेनान्यतरनिर्धारणानुपपत्तिरिति शङ्कते- **नन्वनित्येति** ॥ **पुनः प्रयत्नादीति** ॥ आगमापायिशब्देनानित्यत्वे सिद्धेऽपि यत् पुनरनित्या इत्यनित्यपदं गीताकृत् प्रयुङ्क्ते तेनानित्या एव, न केनाऽपि रूपेण नित्या इति नियमेनानित्यत्वं विज्ञायते । सिद्धे सत्यारम्भो नियमार्थ इति न्यायात् । तेन प्रवाहतोऽप्यनित्यत्वसिद्धिः । प्रयत्नादीत्यादिपदेनानित्यपदव्युत्पत्तिपरिग्रहः । नित्यपदं तावत् 'त्यब्नेर्ध्रुवे इति ध्रुवार्थम् । अनित्यपदं च ध्रुवभिन्नार्थकम् । न च यथाकथञ्चिद् ध्रुवभिन्नत्वं विवक्षितुं युक्तम् । ध्रुवस्यापि तत्त्वसम्भवात् । ततः सर्वथाऽपि ध्रुवभिन्नत्वे वाच्ये सर्वप्रकारेणानित्यत्वसिद्धिः । यद्वा, आदिपदेन प्रकृतोपयोगपरिग्रहः । तथा च प्रकृतोपयोगपर्यालोचनया च विवक्षितार्थसिद्धिरिति व्याख्येयम् । एवंरूपेणोपपत्त्यनुसन्धानेन विनाऽभिप्रेतार्थो न लभ्यत इत्यत 'आलोचनात्' इत्युक्तम् ।

---

अनुवर्तते

तदाऽनुभूयत एव केवलम् । न तु विषयानुभवेन तदोत्पद्यते । अत एव 'दुःखमात्रप्रतिस्मृतेः' इत्युक्तं सूत्रभाष्ये । ननु तदानी मदीयं दुःखमित्येवंरूपफलाभिमानाभावे कथं नीचतोत्पाद इति चेत्, मनसस्तत्रोपरत्यभावाद् विषयाभिमानाभावभावेनास्य वाक्यस्य प्रवृत्तत्वात् । 'मात्रास्पर्शाः' इत्यत्र काका विना योजनोक्ता नरहरितीर्थीये । शीतोष्णानामिंद्रियैः सम्बन्धा एवाऽत्मनः शीतोष्णाद्यनुभवमुत्पाद्य सुखप्रदा भवन्ति । न ह्यात्मनः स्वतो दुःखादि सम्भवति । न च विषयसम्बन्धा एवाऽत्मनः स्वरूपानुबन्धिनः । सुप्तावभावात् । कार्यस्य साक्षात्कारस्य क्वाप्यदर्शनात् । तदेतदुक्तम्- **आगमापायिन इति** ॥ विषयसम्बन्धानामागमापायित्वमेवाऽत्मनि तेषां स्वाभाविकत्वं वारयति तदा किमु वक्तव्यं नित्यत्वं निवारयतीतीत्याह - **अनित्या इति** ॥ अतो विषयसम्बन्धानामात्मनो देहाद्यभिमानद्वारैव दुःखादिहेतुत्वादभिमानं परित्यज्य तान् विषयसम्बन्धांस्तितिक्षस्वेति ।

नन्वत्र यत् प्रवाहतोऽपि विच्छेदवत् तदेवानित्यशब्दार्थतया विवक्षितम्। न चैतद् युक्तम्। सुप्तावपि स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयतया प्रवाहविच्छेदाभावेन मात्रास्पर्शानामनेन विशेषणासम्भवात्। 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति वचनादित्यत आह- **एतदपीति** ॥ 'सविशेषणे विधि-निषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात्। शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवच्छीतोष्णसुखदुःखदत्वमुपसङ्क्रामतीति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तदनित्यमिति मात्रास्पर्श-विशेषणोपसङ्क्रान्तितात्पर्यकमनित्या इति विशेषणमित्यर्थः। न केवलमागमापायिन इति विशेषणमित्यपिशब्दः। तथा च सुप्त्यादावपि सुखदुःखप्रवाहविच्छेदानु-भवादनित्या इति विशेषणं सम्भवतीति भावः।

ननु तर्हि अनित्यशब्दस्य प्रवाहविच्छेदवदर्थकत्वे 'अतो यतः' इत्यादिभाष्येण सुप्त्यादौ प्रवाहविच्छेदार्थकतया आगमापायिशब्दः कथं व्याख्यात इत्यत आह- **आगामीति** ॥ अनित्यपदेन करिष्यमाणमागमापायिशब्दव्याख्यानमित्यर्थः। **उक्तमर्थं** त्रिपाद्योक्तमर्थम्। **पिण्डीकृत्य** सङ्गृह्य। पिण्डीकरणं च बुद्ध्यारोहायेति भावः। देहादावित्यत्राऽदिशब्देनेन्द्रियान्तःकरणयोर्विषयाणां च ग्रहणम्। ममैत इत्यादीत्यादिपदेन विषयेषु शोभनत्वारित्वादिग्रहः। तत्र शरीरेन्द्रियान्तः-करणेष्वात्मनो ममैतदिति भ्रमः। विषयेषु शोभनत्वादिभ्रमनिमित्तस्नेहद्वेषौ भ्रमशब्दार्थ इति विवेक्तव्यम्। अनेन देहाद्यात्मभ्रम इत्यत्र देहादावात्मीयत्वभ्रम इत्यर्थ उक्तो भवति। तथा च प्राचीनटीका- 'देहादावात्मीयत्वेऽभिमान एव' इति। देहात्मैक्यभ्रमस्तु स्वरूपत एवान्यत्र निरस्तः।

नन्वभिमान एव यदि सुखदुःखादिकारणं तर्हि मात्रास्पर्शाभावेऽपि सुखादिकं स्यात्। किञ्चाभिमानसहिता एव विषयसम्बन्धाः सुखादिहेतव इति गतः पक्ष इत्यत आह- **भ्रमसहिता एवेति** ॥ अत्र 'भ्रमशब्दोऽभिमानपरो वर्णनीयः' इति प्राचीनटीका।

अव्यवहितत्वादपि फलत्वेन प्राधान्यात् सुखदुःखपरामर्शे प्रकृतासामञ्जस्यमित्यतस्तच्छब्दार्थमाह- **भ्रमेति** ।। अप्रसक्तत्वे प्रतिषेधोऽनुपपन्न इत्यत उक्तम्- **यत् प्राक् शङ्कितमिति** ।। 'तथाऽपि तद्दर्शनाभावादिना शोकः' इति भाष्ये प्रसक्तमित्यर्थः । विमुक्ताभिमानस्यापि मात्रास्पर्शसम्भवेन तैर्दुःखं स्यादेवेत्यत आह- **नहीति** ।। अभिमानसहितमात्रास्पर्शकार्यं दुःखादि मात्रास्पर्शरूपैकदेशेन भवतीत्येतन्मानबाह्यमित्यर्थः । **विफलान्** शीतोष्णसुखदुःखलक्षणविकाराहेतून् । अभिमानत्यागे विद्यमाना अपि मात्रास्पर्शा न विकारहेतव इति प्रसिद्धं च स्वाभिमतगृहदाहो देवदत्तं दुःखाकरोतीति प्रागेवोपपादितमिति भावः ।। **युक्त इति** ।। शीतादीनां प्रातिपदिकैकदेशार्थत्वेनाप्रधानत्वाद् विशेषणद्वयेन तेषामेवानुसन्धानेन प्राधान्याच्चेति भावः । तच्छब्देन शीतोष्णादीनितिशब्देनोपलक्षणात् । भाष्ये लक्षणाबीजं शक्यसम्बन्धं दर्शयितुमुक्तम्- **शीतोष्णादिहेतूनामिति** ।। शीतोष्णाद्यनुभवद्वारा सुखादिहेतूनामित्यर्थः ।

नन्वत्र शीतोष्णशब्दाभ्यां सर्वविषयोपलक्षकाभ्यां तत्साक्षात्कारो लक्ष्यते । आदिशब्दो हेत्वर्थः । एवं च शीतोष्णादिसाक्षात्कारहेतुभूतान् मात्रास्पर्शान् तितिक्षस्व विफलीकुर्विति भाष्यव्याख्यानं किमिति टीकायां न कृतमिति चेत्, उच्यते । तानित्येतच्छीतोष्णादीनिति व्याख्यायत इति प्रतीतिस्तावत् स्वरसप्राप्ता । तत्राऽदिशब्दस्य हेत्वर्थत्वमस्वरसम् ।

किञ्च 'तांस्तितिक्षस्व' इत्येतावतैव पूर्तौ 'शीतोष्णादीन्' इति भाषणमप्रयोजनम् । अपि च व्याख्येयव्याख्यानभावाविवक्षायां शीतोष्णादींस्तांस्तितिक्षस्वेत्येव भाषणं स्यान्न तु यथान्यासम् । नचाऽदिशब्दस्य मुख्यवृत्तिर्गुणः । बहुदोषसन्निपाते एकस्य गुणस्यास्वरसप्रतीतस्य त्याज्यत्वात् । लक्षणायां प्रयोजनं च मात्रास्पर्शापादितशीतोष्णसुखदुःखलक्षणवैषम्यहीनो भवेदिति ज्ञापनमिति ।

गीताक्षरार्थस्तु- यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया शोको न युक्तः । उक्तविधयाऽऽत्महानेरभावात् । देहहानावपि प्रतिनिधिलाभात् । तथाऽपि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीति धिया शोकः समुत्पतितः । कथम्?

प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः। तेषु मृतेषु तद्देहदर्शनाद्यभावात् सुखहानिः। तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेत्यत उच्यते- **मात्रास्पर्शा इति ॥** मीयन्त इति मात्राः विषयाः। तेषां स्पर्शाः सम्बन्धाः। तु शब्द एवार्थे। 'शीतोष्णसुखदुःखदाः' इत्यत्र शीतोष्णशब्दौ शीतस्पर्शोष्णस्पर्शशब्दितविषयविशेषवाचिनौ गन्धरसरूपस्पर्शशब्दलक्षणसकलविषयोपलक्षकौ। विषयोक्त्या च तत्साक्षात्कारो लक्ष्यत इति तत्र लक्षितलक्षणा। तुशब्दात् परा काकुश्चात्राभिसंहिता। गन्धरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्छ्रोत्ररूपैरिन्द्रियैर्ये सन्निकर्षास्ते शीतोष्णसुखदुःखदाः उक्तसर्वविषयसाक्षात्कारजन्यसुखदुःखप्रदाः। तत्रेष्टविषयसाक्षात्कारात् सुखं भवति। अनिष्टविषयसाक्षात्काराद् दुःखं भवति। तुशब्दात् परया च काक्वाऽभिमानसाहित्यं मात्रास्पर्शानां लभ्यते। अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः? न हि। किं नाम? अभिमानसहिताः, इत्युक्तं भवति। अभिमानो नामात्र 'विषयेषु शोभनाध्यासनिमित्तः स्नेहः अरित्वादिभ्रमनिमित्तो द्वेषश्च। शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकोऽविवेक इत्यादिः' इति टीकातोऽवसेयः। विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः? येनाभिमानोऽप्यधिकः कारणसामग्र्यां निवेश्यत इत्यत उक्तम्- **आगमापायिन इति ॥** यत इत्यध्याहारः। प्रयोजनान्तराभावाद् हेत्वर्थगर्भं वा विशेषणम्। 'सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामागमापायित्वं विशेषणं भवच्छीतोष्णसुखदुःखदत्वमुपसङ्क्रामति। मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत् तदागमापायीत्याशयः।

इदमुक्तं भवति। यदि मात्रास्पर्शा अभिमानमनपेक्ष्याऽऽत्मनः सुखदुःखदाः स्युः, तर्हि सुप्तिमूर्च्छासम्प्रज्ञातसमाधिष्वपि स्युः। नहि कारणसामग्री कार्यं व्यभिचरति। नच वाच्यं सुप्त्यादौ विषयेन्द्रियसम्बन्ध एव नास्तीति। स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात्। अत एव शीतोष्णग्रहणं कृतम्। एतेनेन्द्रियमनस्सन्निकर्षाभावोऽपि प्रत्युक्तः। नचाऽऽत्ममनस्सन्निकर्षाभावः। मनसः कदाऽप्यात्मवियोगाभावस्य 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इत्यागम-

सिद्धत्वात्। अतो मात्रास्पर्शाः नाऽत्मनः स्वयमेव केवलाः शीतोष्णसुखदुःखदा भवन्ति। किन्त्वभिमानसहिता एव। जाग्रत्स्वप्नयोरभिमानवतोरेव मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वानुभवाद् अभिमानरहिते सुस्यादौ तदननुभवादिति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वस्याभिमानान्वयव्यतिरेकानुविधायित्वादभिमानोऽपि कारणसामग्र्यां निवेशनीयः।

नन्वभिमानहीनेऽपि ज्ञानोत्पत्तिस्तृणादौ दृश्यते। सत्यम्। सुखदुःखदं ज्ञानमत्राधिकृतमित्यदोष इति। नन्वभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं न केवलानामित्युपपादितमेतत्। ततोऽनित्या इति व्यर्थमिति चेन्न। आगमापायित्वस्यैवानेन व्याख्यानात्। व्याख्यानेऽपि किं प्रयोजनमिति चेदुच्यते। आगमापायिशब्दो द्वयोः प्रयुज्यते। यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं, यथा गङ्गोदकम्। तदेकमागमापायीत्युच्यते। यस्य तु प्रवाहोऽपि विच्छिद्यते, यथा किंशुककुसुमानाम्। तदपरमिति। तत्राऽगमापायिशब्दादुभयप्रतीतौ यत् प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं तदत्र विवक्षितं न भवति। मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वे तदसम्भवात् प्रकृतानुपयोगाच्च। किन्तु द्वितीयमेव। सुस्यादावभावेन सम्भवात्। उक्तरीत्या प्रकृतोपयोगादित्येतदनित्या इत्यनेनाऽह- **भगवानिति**॥ अतोऽभिमानं परित्यज्य तान् मात्रास्पर्शान् तितिक्षस्व। सामग्रीकार्यस्यैकदेशेनासम्भवाद् विफलान् कुर्विति तात्पर्यमिति॥ १४॥

भगवद्गीता

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥ १५॥

भाष्यम्

अतः प्रयोजनमाह-**यं हीति**॥ यमेते मात्रास्पर्शा न व्यथयन्ति। पुरिशयमेव सन्तम्। शरीरसम्बन्धाभावे सर्वेषामपि व्यथाभावात्

पुरुषमिति विशेषणम्। कथं न व्यथयन्ति ? समदुःखसुखत्वात्। तत् कथम्? धैर्येण ॥ १५ ॥

## प्रमेयदीपिका

अतो मात्रास्पर्शानां विफलीकरणतो भवत्प्रयोजनमाह- **अत इति** ॥ दुःखाभावस्य युद्धाकरणेनैव सम्भवात् किं (कृत्वा)तत् कृत्वा प्रसक्तदुःखाभावायाभिमानत्यागेन इत्येतदाशङ्कापरिहारायेति शेषः। पूर्वश्लोके तितिक्षस्वेति पदं सहस्वेति कैश्चिद् व्याख्यातम्। तदसत्। तदनुवादेऽत्र विफलीकरणस्यैव प्रतीतेरिति भावेनाऽग्रपादं व्याख्याति- **यमिति** ॥ न व्यथयन्ति न चालयन्ति। न शीतोष्णसुखदुःखलक्षणवैषम्यवन्तं कुर्वन्तीत्यर्थः। स्त्रीणामप्येवंविधानां मैत्रेयीप्रमुखानाममृतत्वश्रवणात् पुरुषमिति विशेषणमयुक्तमित्यतोऽन्यथा व्याचष्टे- **पुरीति** ॥ शरीरसम्बन्धिनमेव सन्तम्। शरीरदर्शनवन्तमित्यर्थः। एतदपि किमर्थं विशेषणमित्यत आह- **शरीरेति** ॥ सुप्त्यादौ सर्वेषां प्राकृतानामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्याशङ्कानिवृत्त्यर्थमित्यर्थः। ननु यस्य देहादावभिमानो नास्ति तस्य दुःखं सुखं च नास्तीत्युक्तम्। तस्य कथं 'समदुःखसुखम्', 'धीरम्' इति विशेषणद्वयम्। अस्य पूर्वकक्ष्यागतत्वादित्याशङ्क्य तदुपायप्रदर्शनार्थं पूर्वावस्थानुवादोऽयमिति क्रमेण पृच्छापूर्वकमाशयमाह- **कथमिति** ॥ येनाभिमानत्यागेन मात्रास्पर्शा न व्यथयन्ति स कथम्? केनोपायेन भवतीत्यर्थः। दुःखं यथाऽनुपादेयमपुरुषार्थत्वात्, तथा वैषयिकं सुखमप्यमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः। एवम्भावे च कथं सुखहेतुषु शोभनाध्यासलक्षणः तद्विरोधिषु द्वेषलक्षणोऽभिमानः स्यादिति भावः। तत् समदुःखसुखत्वमेव कथं केनोपायेन भवतीत्यर्थः॥ **धैर्येणेति** ॥ सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकेन प्रयत्नेनेत्यर्थः। ॥ १५ ॥

## भावदीपिका

॥ **कृत्वेति** ॥ युद्धमिति शेषः ॥ **न चालयन्तीति** ॥ व्यथ भयसञ्चलनयोरिति धातुव्याख्यानादिति भावः । ननु पूर्वश्लोके च तितिक्षस्वेत्यनेन चलनाभावस्यानुक्तत्वात् कथमस्य तदनुवादरूपत्वमित्यतस्तत्तात्पर्यमाह - **न शीतोष्णेति** ॥ **एवंविधानां** शीतोष्णसुखदुःखलक्षणरहितानाम् ॥ **अमृतत्वश्रवणादिति** ॥ 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' इत्यारभ्य 'सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' इत्यादिना बृहदारण्यके श्रवणादित्यर्थः । ननु सुप्तानामपि शरीरसम्बन्धित्वेन मात्रास्पर्शकृतव्यथाभावसद्भावेनामृतत्वं स्यादित्यत आह - **शरीरदर्शनवन्तमिति** ॥ सुप्तस्य तु शरीरसम्बन्धे सत्यपि तद्दर्शनं नास्तीति भावः ॥ **प्राकृतानामपीति** ॥ मूर्खाणामपीत्यर्थः । **कक्ष्या**ऽवस्था । अत एव पूर्वावस्थेत्युत्तरग्रन्थः । समदुःखसुखवतो धीरस्यैव ह्यभिमानत्यागोऽन्यथा तदनुपपत्तेरित्येव समदुःखसुखत्वधीरत्वयोरभिमानत्यागापेक्षया पूर्वावस्थागतत्वादभिमानत्यागवत इदं विशेषणद्वयं कथमित्यर्थः ॥ **तदुपायेति** ॥ अभिमानत्यागोपायेत्यर्थः ॥ **पूर्वावस्थेति** ॥ अभिमानत्यागापेक्षया पूर्वावस्था समदुःखसुखत्वादिरूपा तदनुवाद इत्यर्थः । सुखदुःखयोर्विलक्षणत्वात् कथं साम्यमित्यत आह- **दुःखं यथेति** ॥ अमृतत्वविरोधित्वादपुरुषार्थभूतं ततश्चानुपादेयमिति योज्यम् । तथा चानुपादेयत्वेन तयोः साम्यमिति भावः । समदुःखसुखत्वस्याभिमानत्यागे हेतुत्वं दर्शयति - **एवम्भावे चेति** ॥ समदुःखसुखत्वे सतीत्यर्थः । **उत्सेकः** उच्चत्वम् । **विषादो** नीचता ॥ १५ ॥

## भावरत्नकोशः

उपसंहारत्वभ्रमनिरासाय भाष्यस्थातःपदमनूद्य तदर्थं वदन् प्रयोजनमित्यत्राध्याहार्यमाह- **अतो मात्रास्पर्शानां विफलीकरणतो भवदिति** ॥ 'आह' इति भाष्यपदमनूद्यातःपरं वाक्यमध्याहरति- **आह दुःखाभावस्येत्यादि** ॥

क्वचिदाहेत्यनन्तरमत इतीति पाठः। तत्राऽहेत्यनन्तरम् इत्याहेति शेषः। किं **तत् कृत्वा** युद्धं कृत्वा? 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः ॥ **अनुवाद इति** ॥ यच्छब्दयोगादिति भावः । **अत्र** प्रथमपादे । ननु पूर्वश्लोके अभिमानत्यागे विषयसम्बन्धाः विषयानुभवद्वारा दुःखादिहेतवो न भवन्तीत्युक्तम्। अत्र पादे व्यथाशब्दितदुःखमात्राहेतुत्वं प्रतीयते। तत् कथमयं तस्यानुवाद इत्याशङ्क्याऽह- **न चालयन्तीति** ॥ नान्यथयन्तीत्यर्थः। एवमपि प्रकृतोपयोगाय तत्तात्पर्यमाह- **न शीतोष्णेति** ॥ गीताभाष्ययोः व्यथधातुर्विषयानुभवद्वारकसुखदुःखादिवैषम्यपर इत्युक्तानुवादत्वमुपपन्नमिति भावः । **एवंविधानां** मात्रास्पर्शकृतचलनहीनानां समदुःखसुखानां धीराणां चेत्यर्थः । **श्रवणात्** बृहदारण्यके । **विशेषणं** पुरुषशब्देन यच्छब्दार्थस्याधिकारिणः स्त्र्यादिभ्यो व्यावर्तनम्। **अन्यथा** पुरुषत्वरूपधर्मोपस्थापनमन्तरा देहसम्बन्धित्वप्रकारेण। तथा चात्र स्त्रीणामपि ग्रहणे न दोष इति भावः। सुप्त्यादौ शरीरसम्बन्धे सत्यपि व्यथाऽप्रसक्तेर्निषेधायोग इत्यत आह- **शरीरदर्शनवन्तमिति** ॥*

भाष्ये शरीरसम्बन्धशब्देन तत्कार्यबाह्यज्ञानं लक्षयित्वा तस्याभावः शरीरिणोऽवस्थाविशेष एव विवक्षित इति भावेनाऽह- **सुप्त्यादाविति** ॥ सुप्तिमूर्च्छाऽसम्प्रज्ञातसमाधिष्वित्यर्थः। अमृतत्वप्रसक्तिरित्याद्येव शेषोक्तिः। प्रथमपादं तात्पर्यतोऽनुवदन्नुत्तरभाष्यमवतारयितुं शङ्कते- **ननु यस्येति** ॥ देहादौ देहेन्द्रियान्तःकरणविषयेषु। 'इत्युक्तम्' इत्यनन्तरं तथा सतीति शेषः। **तस्य** अभिमानत्यागवतः। **अस्य** समदुःखसुखत्वस्य। अभिमानत्यागहेतुत्वेन पूर्वकक्ष्यागतत्वाद् अभिमानत्यागपूर्वभावित्वात्। धैर्यस्य च समदुःखसुखत्वं प्रति पूर्वभावित्वात्। **तदुपायप्रदर्शनार्थम्** अभिमानत्यागोपायप्रदर्शनार्थं समदुःखसुखत्वोपाय-

* ताम्रपर्णीयम्- 'पुरिशयमेव सन्तम्' इत्यत्र 'शरीरदर्शनवन्तम्' इति टीका। ननु शरीरदर्शनस्याभिमानसाध्यत्वाच्छरीरदर्शनवन्तमप्यभिमानाभावेन मात्रास्पर्शा न व्यथयन्तीत्ययुक्तम्। यद्यात्मनः स्वतःस्युरित्यत्राभिमानस्य विषयानुभवमुत्पाद्य तद्द्वारा सुखादिकारणत्वस्योक्तत्वादिति चेन्न। कारणाभावेन शरीरज्ञाने सत्यपि विषयाभिमानाभावेन मात्रास्पर्शा न व्यथयन्तीत्युपपत्तेः।

कर्माकृत्वेति यावत्। तथा च निष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादि-फलसम्पादनं यथा प्रेक्षावता न क्रियते, तथा ज्ञानिनाऽपि ज्ञानादिसाधनं निष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलं न सम्पाद्यमित्यर्थः। कर्मैव कार्यं कामना तु न कार्येति यदि तर्हि कामितफलाप्राप्त्या खेदः स्यादित्यत आह - **पूर्वोक्त एवेति**॥ अकामनया फलाप्राप्तावपि न खेदः। निष्कामकर्मणा महाफलस्य ज्ञानादेर्लाभात्। महाफललाभेनाल्पहानेरकिञ्चित्करत्वादिति पूर्वोक्त एवाभिप्राय इत्यर्थः॥ **कर्मणि** निवृत्ते॥ **योजनेति**॥ 'स्वर्गकामो यजेत' इत्यादिवाक्यानाम्॥ **कामानुवादेनेति**॥ अङ्गेषु कामस्य सिद्धत्वेन यः कामी स यजेतेति कामस्यानुवाद्यत्वमेव न विधेयत्वम्। तयोर्विरोधादित्याशयः॥ **एवशब्देति**॥ अत इत्येवार्थ इति भाष्यस्थैवशब्देत्यर्थः। ननु स्यादेतदित्या-दिनोक्तशङ्कात्रयपरिहारः 'अतः कर्माकरण एवेत्यारभ्य भूत्वा' इत्यर्थ इत्यन्तेन भाष्येण कथं जात इत्यत आह - **एतदुक्तं भवतीति**॥ **फलेष्विति**॥ लाक्षणिक-शब्दोपादानप्रयोजने दर्शयति- **एतदुपपादनायेति**॥ काम्यफलरूपेष्टानवाप्ति-रूपप्रत्यवायाभावरूपप्रयोजनोपपादनायेत्यर्थः। उपपादनप्रकारस्त्वित्थम्। फलेष्वित्यनुक्त्वा कामनायामित्येवोक्तौ फलानुपस्थित्या कामनायामधिकाराभावे हेतुतयाऽकरणे प्रत्यवायाभावोक्तौ काम्यफलरूपेष्टानवाप्तिलक्षणप्रत्यवाय-सद्भावशङ्कानुदयेनेवेत्यनेन तदभावप्रदिपादनसम्भवादिति॥ **नित्यनैमित्ति-केति**॥ यदकरणे प्रत्यवायो ब्राह्मण्यादिकं निमित्तीकृत्य प्रवृत्तं तन्नित्यम्। यथा सन्ध्यावन्दनादि। यदकरणे प्रत्यवायः पितृमरणाद्यागन्तुकं निमित्तीकृत्य प्रवृत्तं तन्नैमित्तिकम्। यथा पितृश्राद्धादि।

॥ **कामाधिकारेति**॥ कामिनमधिकारीकृत्य विहितानीत्यर्थः॥ **यज्ञादिक-मेवेति**॥ कामाधिकारविहितं ज्योतिष्टोमादिकमेवेत्यर्थः॥ **प्रक्रम्येति**॥ प्रमाण इत्यर्थः॥ **अनुष्ठानवचनादिति**॥ 'निवृत्तं सेवमानस्तु' इत्यनुष्ठानवचनादित्यर्थः

॥ **कामप्रसक्तीति** ॥ 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया' इति वचनादिति भावः ॥ **तत्प्रतिषेधेति** ॥ निष्कामं सङ्गं त्यक्त्वेति क्रियमाणप्रतिषेधेत्यर्थः ॥ **गुणविधानायेति** ॥ ज्योतिषेत्यनेन नामैकदेशग्रहणे नामग्रहणमिति न्यायेन ज्योतिषां स्तोमरूपो ज्योतिष्टोमयागोऽनूद्यते। तथा च ज्योतिषा ज्योतिष्टोमेन यजेतेति यत् तद् वसन्त इति वसन्तकालरूपो गुणो विधीयत इत्ययमपि कामाधिकारविहित एवेति भावः ॥ **न सम्मतमिति** ॥ 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इत्यादौ 'शब्दान्तरात् कर्मभेदः कृतानुबन्धत्वाद्' इति जैमिनीयद्वितीयाध्याये द्वितीयपादे शब्दभेदेन कर्मभेदस्य निर्णीतत्वात् ज्योतिष्टोमज्योतिषोरपि शब्दभेदेन भिन्नयागत्वावगमाज्ज्योतिष्टोमानुवादेन गुणविधानमत्रेति मीमांसकानां न सम्मतमिति भावः। नामैकदेशन्यायस्त्व-गतिका गतिरिति ध्येयम् ॥ **विश्वजितेति** ॥ अयं तु यागः फलकामनां विनैव विहितः। नापि कामाधिकारविहितं विश्वजिद्यागानुवादेनात्र गुणविधानं शङ्क्यम्। तदभावादिति भावः।

नन्वयं यागः कामाधिकारविहित एवेत्याशङ्कते- **तत्रापीति** ॥ **निर्णीत इति** ॥ ननु ज्योतिषेत्यनेन ज्योतिष्टोममनूद्य वसन्तकालाख्यो गुणो विधीयत इत्यत आह - **ज्योतिष्टोमेति** ॥ **न सम्मतमिति** ॥ अनेन प्रतितन्त्रसिद्धान्तोऽय-मिति सूचयति- **निर्णीत इति** ॥ 'विश्वजिद्यागेन भावयेत्' इत्युक्ते 'किं भावयेत्' इत्याकाङ्क्षायाः फलमन्तरेणापूर्तेरवश्यं फले कल्पनीये सर्वाभिलषितत्वेन स्वर्गफलं कल्प्यते। न चार्थकल्पनामात्रेणाऽकाङ्क्षानिवृत्तिः। किन्तु शब्दकल्पनयैव। 'शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यति' इति न्यायात्। अथ फलवाचिशब्दोऽध्याहार्यः। न च तावताऽपि पूर्तिः। निरधिकारिकत्वेन यागाननुष्ठानप्रसङ्गात्। अतोऽधिकारि-समर्थकस्वर्गकामपदाध्याहार एवेत्यर्थः।

'विश्वजिता यजेत' इत्यत्र किं नियोज्योऽध्याहार्यो न वेति सन्देहे द्वारं द्वारमि-

त्यादौ क्रियया विना कार्याभिधानापर्यसानाद् युक्तोऽध्याहारः। इह तु विषयेण कार्यस्यान्विताभिधानपर्यवसानादनध्याहारे प्राप्ते, उच्यते । अत्राप्यभिधेय-पर्यवसानद्वाराऽभिधानपर्यवसानमेव। कार्यं हि साध्यत्वेन कृतिनिरूप्यम्। न नरव्यापाररूपा च प्रकृतिः । सा यथा स्वसाध्यधात्वर्थनिरूप्या एवं स्वाश्रय-नरनिरूप्या। तदेवं प्रकृतेः कर्ताऽपि कार्ये कृतिद्वारा सम्बन्धित्वेन निरूपक इति तमन्तर्भाव्यैव विनियोगधीः । न चासावबुद्ध्वा आत्मनः कार्येण सम्बन्धं स्वतस्तेन सम्बद्ध्यते। स्वसम्बन्धिकार्यबोद्धा च नियोज्य इति सोऽध्याहार्य इति । तत्र स्वर्गकामपदाध्याहारः पूर्वमीमांसायां जैमिनिना निर्णीत इत्यर्थः ॥ **कामिनां तु तथेति** ॥ कर्मणि षष्ठी। कण्ठतः फलकामोऽस्ति येषां तान् प्रति स्वर्गकामपदाध्याहारः क्रियत इत्यर्थः ।

ननु यद्यभिमतोऽध्याहारस्तर्हि 'मा फलेषु' इति कामनाया अकर्तव्यत्वं कस्मात् प्रतिपादितमित्यत आह - **स्ववचनेनेति** ॥ 'विश्वजिता यजेत' इति वेदेन साक्षात् कामना कस्मान्नोक्तेति शङ्कायां कामनायाश्चाकर्तव्यत्वादिति हेतुरध्याहार्यः। तदपि कुत इत्यतः कामनाया अकर्तव्यत्वेऽधिकारप्रत्यवायाभावरूपं कारणं 'मा फलेषु' इत्यनेन गीतायामुक्तमित्यर्थः ॥ **शङ्काया इति** ॥ 'कामात्मनां निन्दा कृता कथमेषाम्' इति शङ्काया इत्यर्थः॥ **अप्रसक्तमिति** ॥ नह्यर्जुनस्य कर्मफलहेतुत्वं प्रसक्तं येन 'मा कर्म फलहेतुर्भूः' इति निषेधः सङ्गतः स्यादित्यर्थः। ननु तर्हि मा कर्मफलतत्कृतिहेतुर्भूरिति गीतायां स्यादिति चेत्, तत्राऽह- **शाकपार्थिवादि-वदिति** ॥ शाकप्रियः पार्थिवः शाकपार्थिव इत्यत्र यथा प्रियपदलोप एवं तत्कृतिपदलोपोऽत्रेत्यर्थः। तथा च मध्यमपदलोपी समास इति भावः । **न करोमि** कर्मेति शेषः। क्लेशरूपत्वात् कर्मण इति शेषः॥ **अनेकार्थत्वादिति**॥ सम्बन्धाद्यनेकार्थत्वादित्यर्थः।

मूले स्नेहो माऽस्त्वित्यस्य कर्म न करोमीत्यासक्तिराग्रहविशेषो माऽस्त्वित्यर्थो

द्रष्टव्यः ।। **सोपपत्तिकमिति** ।। फलस्यानाकाङ्क्षत्वे क्लेशरूपं कर्म न कर्तव्यमिति सोपपत्तिकमित्यर्थः । भक्तिमन्विच्छत इति वक्ष्यमाणानुरोधादाह- **प्रसादशब्देनेति** ।। **प्रसङ्गादिति** ।। कर्तव्यताप्रसङ्गादित्यर्थः । कामत्वाविशेषादिति भावः । मूले तस्याधिकारिणो भवत्प्रसादेच्छायुक्तेत्यर्थः ।। **महदाचारेणेति** ।। आचारप्रतिपादकं वाक्यमाचार इति व्याख्येयम् । एवमुत्तरत्रापि । 'बहिस्तूभयथाऽपि स्मृतेराचाराच्च' इत्यत्र तत्त्वप्रकाशिकायामाचारप्रतिपादकं वाक्यमाचार इति व्याख्यानात् । तथाच 'यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या । आर्या ह्यनार्याः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनुकम्पयैव । यन्नः सुतप्तं तप एतदीदृशं निरन्धसा कालमदभ्रमप्सु । सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय' इति महतां दशप्रचेतसां भगवन्तं प्रति प्रार्थनारूपाचारप्रतिपादकचतुर्थस्कन्धभागवतवाक्येनेत्यर्थः ।। **भगवत्परितोषणस्येति** ।। भगवत्प्रीतिकामनाया इत्यर्थः ।

।। **तदकर्तव्यतायामपीति** ।। भगवत्प्रीतिकामनाया अकर्तव्यतायामपीत्यर्थः ।। **कामनिन्दावचनमिति** ।। सामान्यतः कामनिन्दापरं 'कामन् यः कामयते' इत्यादिवचनमस्ति । तच्च सङ्कोचे कारणाभावात् सर्वविषयमित्यर्थः ।। **विशेषविषय इति** ।। असाधारण्येनापि भगवत्प्रीतिकामनायाः कर्तव्यताज्ञापक इत्यर्थः ।। **न तथेति** ।। भगवंत्प्रीतिकामनाया अकर्तव्यताप्रतिपादकं न भवतीत्यर्थः ।। **सामान्येति** ।। अविशेषितकामनिन्दाप्रतिपादकमित्यर्थः ।। **बाध्यत इति** ।। भगवत्प्रीतिकामनेतरकामनिन्दापरत्वेन सङ्कोच्यत इत्यर्थः । **तद्वत्** भगवत्प्रसादकामवत् ।। **स्वर्गादीति** ।। कामित्वाविशेषादित्यर्थः ।। **विशेषत इतीति** ।। भाष्ये विशेषत इति पदं देहलीदीपन्यायेन पूर्वोत्तरवाक्ययोः सम्बद्ध्यत इत्युक्तं भवति ।। **प्रमाणाभावमिति** ।। स्वर्गादिकामनायाः कर्तव्यत्व इति शेषः ।। **वृणीमह इति** ।। भगवत्प्रसादकामनायाः कर्तव्यत्व इव स्वर्गकामनायाः कर्तव्यत्वे प्रमाणाभावादिति भावः ।

ननु विशेषवचनस्य सामान्यवचनबाधकत्वे पुरोवस्थितपृथुबुध्नोदराकारवति पदार्थे प्रवृत्तयोः 'इयं पृथिवी', 'अयं घटः' इति वाक्ययोरपि बाध्यबाधकभावः स्यादित्यत आह- **विरोधे सतीति** ॥ पृथिवीघट इत्यनयोर्न विरोधः । प्रकृते त्वस्ति विरोध इति भावः ॥ **उक्तमिति** ॥ 'वृणीमहे' इति प्रमाणं भगवत्प्रीतिकामनाकर्तव्यताप्रतिपादनपरत्वे बाधकपरिहारेणोपपादितमित्यर्थः ॥ **अत्रेति** ॥ भगवत्प्रसादेच्छायाः कर्तव्यत्व इत्यर्थः । ननु देवहूतिं प्रति भगवता कपिलेनोक्ते 'नैकात्मताम्' इति वाक्ये भगवत्प्रीतिभक्तिज्ञानाद्यन्यतरेच्छाकर्तव्यताया अनुक्तत्वात् प्रकृतासङ्गतमित्यत आह- **अस्यैवेति** ॥ 'नैकात्मताम्' इत्यस्यैवेत्यर्थः ।

'नैकात्मतां मे स्पृहयन्ति केचित् मत्पादसेवाभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य सम्भाजयन्ते मम पौरुषाणि ॥ पश्यन्ति मे रुचिराण्येव सन्तः प्रसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः । हृतात्मनो हृतप्राणस्य भक्तिमन्विच्छतो गतिमण्वीं प्रयुङ्क्ते ॥' इति वाक्यशेषे भक्तिमन्विच्छत इति भक्तीच्छाया कर्तव्यतोक्तेः । ननु तर्हि 'नैकात्मताम्' इत्येतत् किमुदाहृतमिति चेत्, भक्त्यपेक्षां विना यदा सायुज्यापेक्षा नास्ति तदा किमु वाच्यं स्वर्गादीतरपुरुषार्थापेक्षा नास्तीति कैमुत्येन स्वर्गादिकामनाभावप्रदर्शनार्थमेव तदुदाहरणमिति ज्ञातव्यम् ॥ **जिज्ञासाशब्द इति** ॥ ज्ञातुमिच्छा जिज्ञासेति सन्नन्तो जिज्ञासाशब्द इत्यर्थः ॥ **न ज्ञानेच्छेति** ॥ इच्छाया अविधेयत्वादिति भावः ॥ **विचारस्योपलक्षक इति** ॥ तथाच विचारस्यैव विधिविषयत्वेन काम्यत्वप्राप्त्या ब्रह्मज्ञानेच्छायाः कर्तव्यत्वं न प्राप्तमित्याशयः ॥ **तत्पूर्वक इति** ॥ इच्छापूर्वको ज्ञानसाधनांशभूतश्चेत्यर्थः । 'ब्रह्मज्ञानं मे भूयात्' इति इच्छायां सत्यां विचारे सति पश्चाद् ब्रह्मज्ञानं भवतीति विचारो ज्ञानसाधनीभूतेच्छासाध्यश्चेति

ज्ञानेच्छान्तर्णीत एव विचारो जिज्ञासापदेन लक्ष्यते । अतो ज्ञानेच्छा-साध्यविचारस्यैव विशिष्टस्य विधेयत्वाज्ज्ञानेच्छाया अपि कर्तव्यत्वं लब्धमि-त्याशयः । ननु विचारमात्रस्यैव लक्ष्यत्वमस्तु । किं तत्पूर्वकविचारस्य लक्ष्यत्ववचनेन। येनोक्तार्थसिद्धिरित्यत आह- **अन्यथेति ॥** ज्ञानेच्छापूर्वकत्व-परिहारेण विचारमात्रस्यैव लक्ष्यत्वे लक्षणाबीजसम्बन्धाभावाद् विचारलक्ष-णाऽनुपपन्ना स्यादतो ज्ञानेच्छासाध्यस्यैव विचारस्य लक्ष्यत्वं वाच्यम्। ततश्च विवक्षितार्थसिद्धिरिति भावः। अत एवोक्तं सुधायाम् - 'ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यते' इति। 'विज्ञाय प्रज्ञाम्', 'द्रष्टव्यः' इत्यत्र ज्ञानादिविध्यन्य-थानुपपत्त्या ज्ञानेच्छायाः कर्तव्यत्वं प्रतिपादितमिति ज्ञेयम्॥ **लोकसिद्धव्याप्ति-कानुमानादिति ॥** विष्णुदास्यादिरूपभक्तिगुणोत्कर्षज्ञानादिकं स्वर्गाद्य-नपेक्ष्यैव वैष्णवैः प्रार्थनीयम्। परमप्रीतिसाधनत्वात्। यद् यत्परमप्रीतिसाधनं तदेव तदीयैः प्रार्थनीयम्। यथा राजादिभृत्यैः राजसेवादिकम्। इत्यनुमाना दित्यर्थः। ॥४७॥

## भावरत्नकोशः

विशिष्टविधित्वं मन्यते पूर्वपक्षीति प्रागुक्तं विवृण्वन्नुत्तरभाष्यमवतारयति- **स्यादेतदिति ॥** पूर्वमेतद्वाक्यार्थस्यानुक्तत्वान्न तदुपसंहारार्थातःशब्दो युक्त इत्याशङ्क्य सप्तम्यन्तादेतच्छब्दात् 'आद्यादिभ्य उपसङ्ख्यानम्' इति तसिप्रत्यय इति भावेन भाष्यमनूद्य व्याचष्टे- **अत उक्तन्यायेनेति ॥ पदद्वयस्य** अत इति पदस्य, फलपदस्य च । सर्ववर्णाश्रमोपलक्षणत्वेन, फलकामोपलक्षणत्वेन च लक्षणया प्रतिपादकत्वे सतीत्यर्थः । 'इत्यर्थः' इति भाष्यानन्तरं पूरणीयमाह- **श्लोकार्थस्येति ॥** त इत्यस्योपलक्षितार्थोक्तिः- **सर्ववर्णाश्रमिणामिति ॥** 'मा फलेषु' इत्यस्य लक्षितार्थोक्तिः- **न फलकामनायामिति ॥** अर्जुनादिसर्व-वर्णाश्रमिणां कर्मण्येवाधिकारः कर्माकरणे प्रत्यवाय इत्यर्थो हि विवक्षितः । न चासौ युक्तः। ज्ञानिनां पापलेपाभावात्। ज्योतिष्टोमाद्यननुष्ठाने प्रत्यवायायोगाच्चेत्यत

आह- **अनिष्टप्राप्तीष्टाप्राप्तीति** ।। अज्ञानिनः स्वोचितकर्माकरणे प्रागुत्तरपाप-बाधरूपानिष्टप्राप्तिः, ज्ञानलक्षणेष्टाप्राप्तिश्च । तथाचोक्तमीशावास्यटीकायाम्- 'शतं समाः शतवर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेत् तत् कर्माणि स्वोचितानि कुर्वन्नेव आमरणं भगवत्पूजात्मकान्यसङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि प्रागुत्तराणि पापानि न बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणादन्यथा स्वोचितकर्माकरणे कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अतः कर्माणि कार्याणि' इति । ज्ञानिनोऽपि मौक्तानन्द-ह्रासरूपानिष्टप्राप्तिः, यावत्स्वरूपाविर्भावरूपेष्टप्राप्तिश्चास्ति । तथाच तत्त्व-प्रकाशिकायाम्- 'एवं कर्मकरणे त्वयि कर्म न लिप्यते । इतोऽन्यथा अकरणे नरे ज्ञानिन्यपि त्वयि पापकर्म न लिप्यत इति नास्ति' इति । एवं च ज्ञान्यज्ञान्युभय-परत्वमस्य मन्त्रस्येति भावेनास्योदाहरणमुपपन्नमिति ज्ञेयम् । एतेन ज्ञानिनां पापलेपाभावादिति प्रत्युक्तम् । फलाप्राप्तावित्यत्रोपस्कर्तव्यमाह- **काम्य-फलेति** ।। प्रत्यवायः इष्टप्राप्तिलक्षणः । 'वा विकल्पोपमानयोः' इत्यभिधानादाह- **वाशब्द इति** ।। 'उपमायाम्' इत्येतद् विवृणोति- **यथेति** ।। **खेदहेतुः** अनलम्बुद्धि-हेतुः । **उक्तहेतुद्वयस्य** प्रत्यवायभावाभावरूपहेतुद्वयस्य । भाष्येऽनुक्तेर्गीतोक्तस्य 'मा फलेषु' इति साध्याभिधानस्य तात्पर्यं वदन् शेषमाह- **नन्विति** ।। 'अतः' इति भाष्यमावर्तयन् तत्प्रतियोग्याह- **यत एवमिति** ।। प्रकृते स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति कृतचोद्ये । **तदेव** कर्मैव । कार्यं करणीयमिति व्याख्याने कृतिकर्मत्वस्य कामनायामपि साम्येन प्रकृतासामञ्जस्यादाह- **विधि-विषय इति** ।। लिङ्लोट्तव्यप्रत्ययपञ्चमलकारैर्विहितहेतुतया बोधनीय इत्यर्थः ।। **यतः कामे नाधिकार इति** ।। कामे कामनायां यतोऽधिकारो नेत्यन्वयः । कामाकर्तव्यत्वे हेतोरुक्तत्वात् कामो न कार्य इति भाषणीये कामेन फलप्राप्तिरिति कथं साध्यनिर्देश इत्यत आह- **फलप्राप्तये काम इति यावदिति** ।। स्वर्गप्राप्तये यागो यथा साधनत्वेनेष्यते न तथा फलप्राप्तये काम एष्टव्य इत्यर्थः ।। **ज्ञानादिक-**

**मिति** ।। ज्ञानादिसाधनीभूतं निष्कामकर्माकृत्वेत्यर्थः ।। निवृत्तकर्माण्यननुष्ठाय केवलकाम्यकर्मकरणेन स्वर्गादिसम्पादनं यथाऽप्रेक्षापूर्वकारिणा क्रियते तथा प्रेक्षावता ज्ञानादिसाधननिष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलं न सम्पाद्यमिति भावः । कर्मैव कार्यं कामना तु न कार्येति यदि तर्हि कामितफलाप्राप्त्या खेदः स्यादित्यत आह- **पूर्वोक्त एवेति** ।। कामनया स्वर्गाद्यलाभो न खेदहेतुः । महाफललाभेऽल्पफलहानेरकिञ्चित्करत्वादिति पूर्वोक्त एवाभिप्राय इत्यर्थः * ।। **इत्यादिवाक्यानामिति** ।। तैः स्वर्गकामनाविशिष्टं यजनादिकं कर्म कार्य-तयोच्यत इति वचनव्यक्त्यभ्युपगमादिति भावः ।। **अनादीति** ।। अनादिकालतो वृत्ता या विषयवासना तया वासितमनुषक्तमन्तःकरणं येषां पुंसां ते तथा। कर्मणि अनभिसंहितफले निवृत्तलक्षणे । रोचनार्थमित्यस्यार्थः- **कर्मण्यभिरुचि-जननार्थमिति** ।। 'फलश्रुतिः' इत्यत्र सोपस्कारं शेषमाह- **स्वर्गकाम इत्यादि-फलश्रुतिः प्रवृत्तेति** ।। श्रुतितात्पर्यं विशदयति- **कर्माणीति** ।। अभिप्रायवती सा श्रुतिः प्रवृत्तेति वर्तते । **भैषज्यरोचनम्** औषधेऽभिरुचिजननम् ।। **न्याये-नेति** ।। यत एवं कर्माकरणे प्रत्यवायः अतः कर्मण्येवाधिकारः । यतः कामाकरणे न प्रत्यवायः अतो न कामेऽधिकार इति प्रागुक्तन्यायेनेत्यर्थः । कार्यत्वं विधिविषय-त्वम् । विशिष्टविधित्वभ्रान्तिनिरासाय भाष्यभावमाह- **कामानुवादेनेति** ।। **एवशब्देति** ।। एतेन 'अत एव' इति भाष्यस्थैवशब्दो यजेतेत्येवार्थ इति सम्बद्ध्यत इत्युक्तं भवति । स्यादेतदित्यादिना कृतचोद्यत्रयस्य निरासं गीतारूढं दर्शयितुं भाष्यभावमाह- **एतदुक्तमिति** ।। **कामानुवादेन यजनस्यैवेति** ।। विधानमित्युपस्कर्तव्यम् । फलकामस्य रागशब्दितस्य विषयसौन्दर्यलभ्यस्य पुरुषेषु स्वतस्सिद्धस्य न विधिविषयत्वम् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । तथा च यः कामी स यजेतेति कामस्यानुवाद्यत्वमेव । अनुवाद्यत्वविधेयत्वे च विरुद्धे । अतः कामस्यानुवादेन यजनस्यैवाप्राप्तस्य विधिविषयत्वमित्यर्थः ।

---

* उमर्जीयम्- ननु फलप्राप्तिर्न क्रियते यथेत्ययुक्तम् । फले पुरुषस्य कर्तुः स्वा-तन्त्र्याभावेन कार्यत्वाप्रसक्तेस्तन्निषेधायोगादित्यत आह- **पूर्वोक्त एवेति** ।। यथा प्रेक्षावता फलप्राप्तये ज्ञानादिपरित्यागो न क्रियत इत्यभिप्राय इत्यर्थः ।

ननु 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणया 'सोमवता यागेन भावयेत्' इति वचनव्यक्तिः। तत्र 'किं भावयेत्' इति भाव्याकाङ्क्षायां 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्येनोत्पत्तिवाक्यप्राप्तसोमयागानुवादेन स्वर्गलक्षणफलसम्बन्धमात्रं विधीयते। 'ज्योतिष्टोमनामकेन यागेन स्वर्गं भावयेत्' इति हि मीमांसकप्रक्रिया। तत्कथं यजनस्यैव विधानमित्युक्तमिति चेत्, उच्यते। क्रिययैव सह विधेरन्वय इति नियमात् क्रियोपरक्ता भावना विधेया। एवञ्च प्रतीतितो विशिष्टविधिः, फलतस्तु फलविधिरिति न मीमांसकप्रक्रियाविरोधः। कामस्यानुवाद्यत्वमनन्तरमेवोक्तमिति। तत् कुतः? न कामो विधेयः, किन्तु यजनादिकर्मैव विधेयमिति कस्माद् हेतोरवगन्तव्यमित्यर्थः। **तदपि कर्मण एव कार्यत्वं कामस्य तदभाव इत्येतदपि। कर्मकामाकरणयोः** कर्माकरणकामाकरणयोः। **प्रत्यवायभावाभावयोः** कर्माकरणे प्रत्यवायभावात् कामाकरणे प्रत्यवायाभावादिति हेत्वोरित्यर्थः॥ **एतदुपपादनायेति**॥ काम्यफलाख्येष्टानवाप्तिरूपप्रत्यवायाभावलक्षणप्रयोजनोपपादनाय 'फलेषु' इति गीतायां लाक्षणिकफलशब्द उपात्त इत्यर्थः। उपपादनप्रकारस्तु- फलेष्वित्यनुक्त्वा कामनायामित्येवोक्तौ फलानुपस्थित्या कामनायामधिकाराभावे हेतुतयाऽकरणे प्रत्यवायाभावोक्तौ काम्यफलरूपेष्टानवाप्तिलक्षणप्रत्यवायसद्भावशङ्कानुदयेन तदभावप्रतिपादनानवकाशः। फलेष्वित्युक्तौ फलोपस्थित्योक्तशङ्कोदयेन 'फलप्राप्तौ ज्ञानादिना वा' इति भाष्येण तदभावप्रतिपादनसम्भव इति। कर्मकामसम्बन्ध्यकरणकरणनिमित्तप्रत्यवायभावाभावहेतुककर्माधिकारकामनाधिकारसाधनकर्मकार्यत्वाकार्यत्वकारणकयजनविधानाकामाविधाने इत्येवं प्रणाड्युपपादनायेत्यर्थ इति तु स्वामिनः॥ **नित्यनैमित्तिकानीति**॥ यदकरणे प्रत्यवायो ब्राह्मण्यादिकमेव निमित्तीकृत्य विहितं तन्नित्यम्। यथा सन्ध्यावन्दनादि। यदकरणे प्रत्यवाय आगन्तुकं निमित्तीकृत्य विहितं तन्नैमित्तिकम्। यथोपरागस्नानादीति नित्यनैमित्तिकानि विविच्य ज्ञातव्यानीति। कामाधिकारे विहितानि कामिनमधिकारिणं प्रति विहितानीति हेत्वर्थगर्भं विशेषणम्। यज्ञादिकमेव कामाधिकारविहितज्योतिष्टोमादिकमेवेत्युक्तम्। अस्य वचनस्य 'एतान्यपि तु कर्माणि' इत्यादिवचनानां च नित्यादि-

विषयत्वोपपत्तेरित्याशङ्क्य निषेधति- **नचैतानि नित्येति** ॥ तत्र कामपदरहित-नित्यनैमित्तिककर्मसु । फलश्रवणाभावस्य तत्त्वेनैव सिद्धत्वादिति भावः । 'वसन्ते' इत्यादिभाष्ये चशब्दादाह- **किञ्चेति** ॥ अयं च निपातसमुदायो युक्त्यन्तरद्योतकः । तस्य विवरणम्- **नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकस्य यज्ञस्य फलकामनया विनाऽभिधानाच्चेति** ॥ मुमुक्षुणा निष्कामतयाऽनुष्ठेयं ज्योतिरादिकर्मास्तीति विज्ञायत इति युक्तमिदं व्याख्यान-मिति सम्बन्धः । नचेदं सन्ध्यावन्दनादिवदवश्यानुष्ठेयम् । प्रत्यवायाश्रवणादिति भावः । कामाधिकारविहितज्योतिष्टोमवाक्यैकवाक्यत्वादस्य कामनया विना विहितत्वमेव नास्तीति शङ्कते- **ज्योतिष्टोमस्येति** ॥ एवशब्देन नात्र यज्ञान्तरं विधित्सितमित्यभिप्रैति । ज्योतिषा ज्योतिष्टोमेन यजेतेति यत् तद्वसन्त इति वसन्तकाललक्षणगुणविधानाय । अयं ज्योतिश्शब्दः अनुवादः । तथाचैतदपि कामाधिकारविहितमेवेति भावः ॥ **न सम्मतमिति** ॥ अन्यथा वीप्सा न स्यादिति भावः ॥

नन्वानन्दमयाधिकरणसुधायां 'ज्योतिष्टोमाधिकारे ''वसन्ते वसन्ते ज्योतिषा यजेत'' इति कालविशेषविधिपरे वाक्ये ज्योतिःशब्दो ज्योतिष्टोमस्याभिधायकः' इत्यादिनैकदेशोत्कीर्तनेन ज्योतिश्शब्देन ज्योतिष्टोमानुवादमङ्गीकृत्य वसन्तकाल-लक्षणगुणविधानाभ्युपगमेन तद्विरोध इति चेन्न । कामिनः प्रति ज्योतिष्टोमवाक्यैक-वाक्यतया वसन्तवाक्यं योजनीयमिति सुधाभिप्रायः । मुमुक्षून् प्रति तु ज्योतिष्टोमवाक्यैकवाक्यतया न योजनीयम् । किन्तु विशिष्टक्रियान्तरविधायकमिति व्याख्येयमित्येतट्टीकाभिप्राय इत्यविरोधेन सुधाप्रमेयदीपिकयोर्नेतव्यत्वात् । तथाच वक्ष्यति- 'कामिनां तु तथा' इति । अत एव 'न सम्मतम्'इति प्रतितन्त्र-सिद्धान्तत्वाभ्युपगमं सूचयति ॥ **निर्णीत इति** ॥ पूर्वतन्त्रे 'विश्वजिता यजेत' इत्यादौ यत्र फलाश्रवणं तत्र कामिनियोज्यान्वयाय स्वर्गकामपदाध्याहारः । 'स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्' इत्यधिकरणे जैमिनिना सिद्धान्तित इत्यर्थः । तथा अध्याहारेण कामाधिकारनिर्णयः । मुमुक्षूणां तु न कामपदाध्याहार इति तुशब्दः ।

ननु यदि स्वर्गकामपदाध्याहारो वेदाभिप्रेतः स्यात् तर्हि गीतायां 'मा फलेषु' इति फलकामनिषेधोऽनुपपन्नः स्यात्। वेदाभिप्रायस्य निषेधानर्हत्वादित्यत आह- **स्ववचनेनेति** ॥ 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इतिवत् 'विश्वजिता स्वर्गकामो यजेत' इति वेदेनाध्याहारमन्तरा स्ववचनेन साक्षात् फलाकथने निष्कामतया भगवत्पूजात्मकत्वेन कर्मकर्तव्यत्वलक्षणं कारणमिह 'कर्मण्येवाऽधिकारः' इति गीतायां भगवतोक्तमित्यर्थः ।*

शङ्कायाः 'कामात्मनां निन्दा कृता कथमेषाम्' इति शङ्कायाः । अत इत्यस्यार्थोक्तिः- **फलेति** ॥ **अप्रसक्तमिति** ॥ नहि कर्मफलं स्वर्गादिकं प्रति कर्ता साधनमित्यप्रसक्तप्रतिषेधोऽनुपयुक्त इति भावः । नन्वेवं समासाभिप्राये तत्कृतिपदमपि श्रूयेतेत्यत आह- **शाकपार्थिवादिति** ॥ शाकप्रियः पार्थिवः शाकपार्थिव इत्यत्र यथा प्रियपदलोपस्तथाऽत्र समासे तत्कृतिपदलोप इत्यर्थः । यद्यपि समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च' इति वार्तिके तत्पुरुष एवोत्तरपदलोप उक्तो न बहुव्रीहौ। प्रकृतश्च बहुव्रीहिः। तथाऽपि शरणदेवेन 'साक्षतपात्रहस्ता' इत्यत्र साक्षतपात्रयुक्तो हस्तो यस्या इति विगृह्य 'शाकपार्थिवादित्वान्मध्यमपदलोपः' इत्युक्तत्वेन तत्पुरुष एवेति नियमस्य त्याजितत्वादिहापि तदुपपत्तिः।

केचित्तु, 'शाकपार्थिवादिवत्' इति लोपमात्रे दृष्टान्तः। अत्र लोपश्च 'पृषोदरादीनि यथोपदिष्टम्' इति शास्त्रेण। न चेदं वर्णलोपशास्त्रं न समुदायलोपशास्त्रम्, 'वर्णागमो वर्णविपर्ययश्च' इत्याद्युक्तेरिति वाच्यम्। जीवनं जलं मूतं बद्धं येन स जीमूत इत्यत्र वनमिति समुदायलोपस्य वैयाकरणैरभ्युपगमादित्याहुः। बहुलग्रहणाद् बहुव्रीहावप्युत्तरपदलोप इत्यन्ये। तत्कृतौ कर्मानुष्ठान इति भाष्यार्थः। तेनाप्रसक्तप्रतिषेध इति शङ्का निरस्तेति ज्ञातव्यम्। **सोपपत्तिकं** स्वयं क्लेशरूपत्वादित्युपपत्तिसहितं यथा भवति तथेत्यर्थः । 'भक्तिमन्विच्छन्तः' इत्युपरिभाष्ये, 'भक्तिज्ञानादिप्रार्थना कार्या' इत्युपसंहारभाष्ये, 'ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि

* उमर्जीयम्-**कारणमिति** ॥ काम्यस्यापि कामनां विना कर्तव्यत्वरूपमित्यर्थः ।

क्वचित्। नाऽकाङ्क्ष्यम्' इत्यन्यत्र च ज्ञानादेरपि प्रार्थनीयत्वोक्तेराह- **प्रसाद-शब्देनेति** ॥ आदिपदेन वैराग्यग्रहः। **कामस्य** इच्छायाः। निन्दितत्वात् 'मा फलेषु' इत्यादौ। **तस्य** भगवत्प्रसादादे**रिच्छा** तत्कर्मकेच्छेति भाष्यार्थः स्फुट इति प्रमाणार्थमाह- **तवेति** ॥ 'स्वकृतसुकृतजातमनूद्य तत्सर्वं तव परितोषणाय वृणीमहे' इति प्राचीनटीकामनुरुन्धान आह- **सकलं कर्मेति** ॥ **महदाचारेणेति** ॥ 'यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या। आर्या ह्यनार्याः सुहृदो भ्रातरश्च सर्वाणि भूतान्य(नुकम्पयैव)नसूययैव ॥ यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु। सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय' इति चतुर्थस्कन्धे निरन्धसां निरन्नानाम् अप्सु अनल्पं कालं 'कालाध्वनोरत्यन्तसंयोगे' द्वितीया। यत् तपस्सुतप्तं तप आदिकमाचीर्णं तत् सर्वं भगवत्परितोषणायेति महतां प्रचेतसां भगवत्परितोषणप्रार्थनरूपाचार-प्रतिपादकवचनेनेत्यर्थः। **अकर्तव्यतायामपि** भगवत्परितोषणस्येति वर्तते। **कामनिन्दावचनं** 'यामिमाम्' इत्यादिकम्।

भगवत्परितोषणं न कर्तव्यमिति विशेषतो निन्दावचनाभावादिति भाष्याक्षरार्थ इति भावेन तदभिप्रायमाह- **यथेति** ॥ **तद्वत्** भगवत्परितोषणकामनावत् ॥ **विशेषत इतीति** ॥ अनेन विशेषत इति पदमुभयत्र सम्बद्ध्यत इत्युक्तं भवति। 'स्वर्गपराः', 'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' इति विशिष्य स्वर्गादिनिन्दावचनादिति भाष्यार्थ इति भावः। **प्रमाणाभावं** स्वर्गादिकामनायाः कर्तव्यत्व इति शेषः। ननु सङ्कोचार्हार्थत्वं बाध्यत्वं, सङ्कोचकत्वं बाधकत्वं प्रसिद्धम्। तद् द्वयं शब्दनिष्ठम्। नार्थगतम्। किञ्च यत्र विरुद्धयोर्मध्येऽन्यतरस्याप्रामाण्यं तत्रार्थसङ्कोचोऽपि नास्तीत्यत आह- **सामान्य-विशेषशब्दाविति** ॥ **प्रमाणेति** ॥ प्रमाणभूतशब्दधर्मावेवात्र बाध्यत्वबाधकत्वे विवक्षिते इति नोक्तदोष इति भावः।

ननु सामान्यविशेषविषयकशब्दयोर्बाध्यबाधकभावे 'इयं पृथिवी', 'घटोऽयम्' इति शब्दयोरपि बाध्यबाधकभावापत्तिरित्यत आह- **विरोधे सतीति** ॥ इति

समुच्चीयत इति शेषः। अत्र भगवत्परितोषणकामनाकर्तव्यत्वे। ऐक्यार्थत्वभ्रमं निरस्यन्नर्थमाह- **सायुज्यमिति** ॥ एक आत्मा देहो ययोः परमात्मसायुज्यभाजोस्तावेकात्मानौ । तयोर्भाव एकात्मतेति विग्रहे सायुज्यमेव लभ्यत इति भावः। तथाच तात्पर्यम्- 'नेच्छन्ति सायुज्यमपि' इति। 'नैकात्मताम्' इति सामान्यतः कामनिषेधवचनोदाहरणस्य प्रकृतोपयोगसिद्ध्यर्थं भाष्ये 'भक्तिमन्विच्छन्तः' इत्युक्तमिति भावेनाऽऽह- **अस्यैव विशेषोऽयमिति** ॥ तथा च अनेन 'भक्तिमन्विच्छन्तः' इति विशेषशास्त्रेण 'न स्पृहयन्ति' इति कामनानिषेधसामान्यशास्त्रस्य बाध इति भावः। यद्यपि 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः। येऽन्योन्यतो भागवताःप्रसज्य सम्भाजयन्ते मम पौरुषाणि॥ पश्यन्ति मे ते रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः। हृतात्मनो हृतप्राणस्य भक्तिमन्विच्छतो मे गतिमण्वीं प्रयुङ्क्ते ॥' इति तृतीयस्कन्धे कपिलवचने उक्तलक्षणैः स्वस्वरूपैर्हृतमनसस्तद्विषयकसर्वेन्द्रियचेष्टस्य भक्तिमेवान्विच्छतोऽपि पुंसःप्रसन्नोऽहमण्वीमतिसूक्ष्मां गतिं सायुज्यलक्षणां ददामीति षष्ठ्येकवचनान्त एव पाठः स्पष्टमालक्ष्यते। व्याख्यातश्चायमेव पाठो विजयध्वजतीर्थश्रीचरणैः। तथाऽपि 'नैकात्मताम्' इत्यत्रापि भक्तिमन्विच्छत इति पदं विभक्तिवचनविपरिणामेनाऽऽकृष्य योजनीयमिति भावेन भाष्यटीकयोरेवमुक्तम्।

यद्वा, 'अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये' इत्यादौ सेवाशब्दस्य भक्त्यर्थकत्वदृष्टेरभिरतिशब्दस्य चाभिलाषापरपर्यायेच्छावाचकत्वान्मत्पादसेवाभिरता इति पदमेव भाष्यटीकयोरर्थतोऽनूदितं 'भक्तिमन्विच्छन्तः' इतीत्यभियुक्ताः।

केचित्तु 'हृतात्मनो हृतप्राणाश्च भक्तिमन्विच्छन्तः' इत्येव मूलकोशपाठः। य एवंविधास्तेषां गतिमण्वीं प्रयुङ्क्त इत्यन्वयस्वारस्यात्। एकवचनान्तपाठपक्षे बहुवचनान्तशब्देन प्रकृतानामेकवचनान्तेन परामर्शः कर्तव्य इति वैरूप्यप्रसङ्ग इति भावेनैवमुक्तमित्याहुः।

अन्ये तु 'तस्यैव शेषोऽयम्' इत्येव टीकापाठः । नतु विशेषोऽयमिति । भक्तिमन्विच्छन्तो महानुभावाः सायुज्यमपि नेच्छन्तीति भागवते प्रकृतोपयोगाय शेषं पूरितवान् भाष्यकार इत्यर्थ इति व्याकुर्वते।

नेदं सूत्रं ज्ञानकामनाकर्तव्यतायां प्रमाणमित्याशङ्कते- **ननु ब्रह्मजिज्ञासेति** ।। ज्ञातुमिच्छा हि जिज्ञासा। 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति स्मरणात् । सा च न कर्तव्येति युज्यते । इच्छायाः स्वातन्त्र्याविषयत्वेन विधातुमशक्यत्वादिति भावः ।। **विचारस्येति** ।। युक्त्यनुसन्धानात्मकस्य मननापरनामकस्येत्यर्थः ।। **सत्यमिति** ।। अयं चाभ्युपगमवादः । सुधायां 'जिज्ञासाशब्दो मीमांसाशब्दवत् विचार एवोपसङ्ख्यायते' इति स्वमताभिधानेन जिज्ञासाशब्दस्योक्तविधविचाराभिधायकत्वावगमात् । जिज्ञासाशब्दस्य विचारेऽभिधावृत्तिश्च 'जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यते।। अन्यथा मण्टपादीनां गृहादौ स्यान्न रूढता। गङ्गाशब्दात् तु तीरादि तद्धीपूर्वं प्रकाशते' इति चन्द्रिकायां विभाविता। **तत्पूर्वकः** इच्छापूर्वकः।

ननु केवलविचारस्यैव लक्ष्यत्वमस्तु। किमिच्छापूर्वकस्य तस्य लक्ष्यत्ववचनेनेत्यत आह- **अन्यथेति** ।। इच्छोपस्थित्यभावे लक्षणाबीजस्य शक्यसम्बन्धस्यैवाभावात् तत्पूर्वकत्वं वक्तव्यमित्यर्थः । 'आत्मा वा अरे द्रष्टव्यः' इति परमात्मदर्शनानुवादेन तत्साधनतया 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रवणमनननिदिध्यासनानि विधीयन्त इति ज्ञानस्यैष्टव्यत्वमिव विचारस्यैष्टव्यत्वं वक्तुं सूत्रमुदाहृतम्।* 'स्वार्थसेवकम्' इत्यादिना व्याप्तिरेव लोकसिद्धाऽनूद्यते।

---

* ताम्रपर्णीयम्- 'ब्रह्मजिज्ञासा' इत्यत्र **तत्पूर्वको विचारो लक्ष्यत इति** ।। ननु तत्त्वप्रकाशिकायां जिज्ञासाशब्दस्य विचारवाचकत्वे 'जिज्ञासितं सुसम्पन्नम्' इति प्रयोगस्य प्रदर्शितत्वेन तद्विरोध इति चेन्न। जिज्ञासाशब्दस्य मनने प्रयोगेऽपि श्रवणनिदिध्यासनयोरप्रयोगात् तल्लाभाय छत्रिन्यायस्य वा मननवाचकेनाजह-

अनुवर्तते...

लक्षणया तत्कार्यकारणश्रवणनिदिध्यासनयोर्लक्षणाया वा स्वीकारेऽपि ज्ञानेच्छा-वाचकेन जिज्ञासाशब्देनैव तदनन्तरभाविनां ज्ञानात् पूर्वभाविनां श्रवणादित्रया-णामपि लक्षणा लघीयसीति भावेनास्य ग्रन्थस्य ज्ञानेच्छान्तर्णीतो विचारो लक्ष्यत इति सुधाग्रन्थस्य च प्रवृत्तत्वात्। समुदायरूपेण लक्ष्यत्वमेकदेशेन वाच्यत्व-मित्यविरोध इति ज्ञेयम्। नन्वत्र ब्रह्मज्ञानेच्छायाः कर्तव्यत्व इदं सूत्रं प्रमाणमस्तु। अनेकार्थत्वेन सूत्रभाष्यविरोधाभावात्। नचेच्छाया अविधेयत्वाद् विचारोप-लक्षकत्वमुचितमिति वाच्यम्। 'अनिन्दनाद् विशेषत इतरनिन्दनाच्च' इति भाष्यटीकायां 'नन्वकर्तव्यतायामपि कामनिन्दावचनं प्रमाणमस्ति' इत्युक्त्या यथेच्छायाः कर्तव्यतायां महदाचारोऽस्ति तथाऽकर्तव्यतायामपीति प्राप्तत्वात्। 'तर्हि तद्वत् स्वर्गादिकामनाऽपि कार्येति यदुक्तं तत्राऽह' इति चोक्त्या भक्ति-ज्ञानादीच्छायाः कर्तव्यत्वे तद्वत् स्वर्गादिकामस्याऽपि कर्तव्यत्वप्रसङ्ग इति लब्धत्वे-नेच्छाया विधिनिषेधविषयत्वस्योक्तत्वात्।

किञ्च 'न देवपदमन्विच्छेत्' इतीच्छानिषेधस्य 'सर्वान् वेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इत्यादाविच्छाविधेश्च दर्शनात्। नच तत्राऽपि ज्ञानेच्छान्त-र्णीतविचारलक्षणा। 'वेदानधीत्य' इति श्रवणादेर्मुखत उक्तत्वात्। 'अकामि-नोऽवाग्गतिमेव दद्यात्' इत्यादौ भगवत्प्रसादकामस्य विहितत्वात्। 'भक्ति-ज्ञानादिप्रार्थना कार्येति सिद्धम्' इति भाष्य एवात्र स्पष्टमुक्तत्वाच्चेति चेत्, अत्र ब्रूमः। 'कार्यता च न काचित् स्यादिष्टसाधनतां विना' इत्युक्तरीत्या या इष्ट-साधनतालक्षणा कार्यता सा इच्छायामस्त्येव। तद्विवक्षया चेच्छायाः कर्तव्यत्व-परवाक्यानां प्रवृत्तिः। तत्त्वप्रकाशिकादाविच्छाया अविधेयत्ववचनं प्रवर्तकज्ञान-विषयीभूतकृतिसाध्यताविशेषितेष्टसाधनत्वाभावपरम्। इच्छायाः कृत्यविषय-त्वात्। अत एव भगवत्पादैः 'इच्छा च तस्य युक्ता' इतीष्टसाधनत्वमुक्तमिति ज्ञेयम्। जिज्ञासासूत्रं तु शास्त्रे प्रवर्तयितुं प्रवृत्तं कृतिसाध्येष्टसाधनत्वरूपकार्यता-परम्। न साक्षादिष्टसाधनत्वमात्रपरमिति भावः।

न तु न्यायः। अत आह- **लोकसिद्धन्याप्तिकेति** ॥ विष्णुभक्त्यादिकं वैष्णवैः प्रार्थनीयम्। तत्परमप्रीतिसाधनत्वात्। यद्यत्परमप्रीतिसाधनं तत्तदीयैः प्रार्थनीयम्। यथा राजभृत्यै राजसेवादिकमित्यनुमानादित्यर्थः। स्वप्रयोजनमुद्दिश्य राजानं सेवमाने भृत्ये राज्ञो न तादृशी प्रीतिः यादृशी त्वत्सेवातस्त्वत्प्रीतिरेव ममास्त्विति निरुपाधिकसेवाकारिणि पुरुष इति भाष्यार्थः। यदाहुः- 'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्। स वै भृत्यः स वै स्वामी गुणलुब्धौ न कामुकौ' इतीति स्फुटत्वान्नोक्तः।

गीताक्षरार्थस्तु- सकामतया कर्म कुर्वतां 'यामिमाम्' इत्यादिना या निन्दा कृता सा न युक्ता। कुतः? 'स्वर्गकामो यजेत' इत्यादौ यजनवत् स्वर्गकामस्यापि विहितत्वात् । न विहितं कुर्वतां निन्द्यत्वम्। तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गात्। नच यजनकामनयोर्द्वयोरपि विधौ वाक्यभेदप्रसङ्ग इति वाच्यम्। स्वर्गकामविशिष्टयागविधिरिति पूर्वपक्ष्यभिमानात्। दृश्यते हि 'वायव्यं श्वेतमालभेत' इत्यादौ विशिष्टविधित्वमित्यत उच्यते- **कर्मण्येवेति** ॥ त इति श्रवणाद्धे पार्थ ते त्वदादिरूपस्य ब्राह्मणादिसर्ववर्णाश्रमयुक्तस्य ज्ञानिनोऽपि कर्मण्येवाधिकारः योग्यता। फलेषु फलकामनासु माऽधिकारः कदाचनेति मुमुक्षोः सर्वथा फलकामो मोक्षविलम्बहेतुत्वादकर्तव्य इत्याह। ननु त इति सर्ववर्णाश्रमोपलक्षणमिति किमर्थमुच्यते? वक्तर्यायत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यताम्। किं लक्षणयेति चेदुच्यते। कृतोऽपि कामो न ज्ञानिनोऽत्यन्तबाधकः। तत्प्रतिबन्धनीयस्य ज्ञानस्य प्राप्तत्वात्। मोक्षस्य नियतत्वात्। तथाऽपि मोक्षविलम्बहेतुत्वाज्ज्ञानिनाऽपि न कर्तव्यः, किम्वन्येषामज्ञानिनाम्? इति प्रदर्शनायोपलक्षकपदप्रयोग इति। एवमेव फलपदे लक्षणाश्रयणे प्रयोजनं टीकायामुक्तमनुसन्धेयम्। अतः कर्मैव कार्यम्। तदकरणे 'कुर्वन्नेवेह कर्माणि' इत्युक्त्वा 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति प्रत्यवाय इव कामनाया अकरणे प्रत्यवायो न श्रूयत इति नासौ कर्तव्या। नच वाच्यं 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामनाविशिष्टं कर्म कार्यतयोच्यत इति कथमकर्तव्यत्वं तस्या इति। कामानुवादेन यागविधेरेव तत्राङ्गी-

कारेण विशिष्टविधेरनभ्युपगमात् । अत एवं कामनाया विध्यविषयत्वात् कर्मफल-हेतुः कर्मफलं कर्मफलाभिसन्धानं तत्कृतौ कर्मानुष्ठाने हेतुर्यस्य पुरुषस्य स मा भूः । तर्हि स्वयं क्लेशरूपत्वात् कर्मैव न करोमीत्यत उक्तम्- **मा त इति** ।। ते तव त्वादृशस्य सर्वस्यापि ज्ञानिनः अकर्मणि फलाभावेऽपि कर्माकरणे सङ्गः स्नेहः माऽस्तु न कार्यः । स्वर्गादिरूपाल्पास्थिरफलाभावेऽपि मोक्षरूपस्थिरमहापुरुषार्थ-साधनज्ञानभक्तिवैराग्यभगवत्प्रसादाख्यफलभावात् । ज्ञानभक्त्यादिकामनाया अनिन्दितत्वात् । प्रत्युत 'वृणीमहे ते परितोषणाय' इति विहितत्वाच्च तस्या एव कर्तव्यत्वं न फलकामस्येति तात्पर्यादिति । ।। ४७ ।।

### भगवद्गीता

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।। ४८ ।।

### भाष्यम्

पूर्वश्लोकोक्तं स्पष्टयति- **योगस्थ इति** ।। योगस्थः[१] उपायस्थः । सङ्गं फलस्नेहं त्यक्त्वा । तत एव सिद्ध्यसिद्ध्योः समो भूत्वा । स एव च मयोक्तो योगः । ।। ४८ ।।

### प्रमेयदीपिका

'कर्मण्येव' इत्यनेन 'योगस्थः' इत्यस्य गतार्थतापरिहारार्थमाह- **पूर्वेति** ।। निष्कामतादिविशिष्टानि कर्माण्येव योगः । अतो 'योगस्थः' इत्यनेनैव लब्धं पुनः 'कुरु कर्माणि' इति किमर्थमुच्यत इत्यत आह- **योगस्थ इति** ।। ज्ञानोपायमनुतिष्ठन्नित्यर्थः । 'कर्मसम्बन्धं त्यक्त्वा कर्माणि कुरु' इत्येतद् व्याहतमित्यत आह- **सङ्गमिति** ।। 'ईश्वरो मे प्रसीदतु' इत्यभि-सन्धिमपि त्यक्त्वेति व्याख्यानं पूर्वमेव निरस्तम् । 'तत एव' इति परामर्श-

१. ब. 'योगस्थः' इति न पठ्यते ।

**सौकर्याय त्यक्त्वेत्यनुवादः कृतः। 'सङ्गं त्यक्त्वा', 'सिद्ध्यसिद्ध्योः समो भूत्वा' इति द्वयमुक्त्वा 'समत्वं योग उच्यते' इत्येकस्यैव ग्रहणमयुक्तम्। तथा सति सङ्गत्यागस्यायोगत्वप्रसङ्गादित्यत आह- तत एवेति ।। सङ्गत्यागादेव । एतयोः कार्यकारणभावात् कार्ये गृहीते कारणमर्थाद् गृहीतमेवेति भावः ।**

**ननु समत्वयोगयोर्भेदः केन शङ्कितः? येन 'समत्वं योग उच्यते' इति तयोरैक्यमुच्यत इत्यत आह- स एव चेति ।। 'योगस्थः' इत्युक्ते को योग इत्यपेक्षायां भगवता 'सङ्गं त्यक्त्वा', 'सिद्ध्यसिद्ध्योः समो भूत्वा' इति योगो व्याख्यातः। मन्दास्तु पृथगेव ते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुदितमिति भावः । स एव यत् समत्वमिति शेषः। योगैकदेशे योगशब्दः। ।। ४८ ।।**

## भावदीपिका

।। **कर्माण्येव योग इति** ।। तं कुर्वाणो योगस्थ इत्युच्यत इति शेषः ।। **लब्धमिति** ।। पूर्वश्लोकोक्तस्पष्टनं लब्धमित्यर्थः ।। **पूर्वमेवेति** ।। 'इच्छा च तस्य युक्ता' इत्यादिना भगवत्प्रसादकामनायाः कर्तव्यताप्रतिपादनादित्यर्थः। ननु त्यक्त्वेत्यस्य व्याख्यानाभावात् किमर्थं भाष्ये तदनुवाद इत्यत आह- **तत एवेतीति** ।। अन्यथा सङ्गत्यागादेवेति वक्तव्यत्वप्राप्त्या गौरवापत्तेरिति भावः। **तथा सति** एकस्य ग्रहणे सति । **एतयोः** समत्वसङ्गत्यागयोः ।। **को योग इति** ।। ज्ञानोपायः क इत्यर्थः ।। **पृथगेव त इति** ।। सङ्गत्यागः समभवनं च योगस्थत्वरूपविशेषणापेक्षया पृथक् स्वतन्त्रं विशेषणान्तरमेव, नतु योगस्वरूप-व्याख्यानरूपमिति मन्दाः कल्पयिष्यन्तीत्यर्थः । सङ्गत्यागसमभवनयोरेव वस्तुगत्या योगत्वाद् 'योगस्थः सङ्गं त्यक्त्वा', 'सिद्ध्यसिद्ध्योः समो भूत्वा' इत्यनयोः पुनरुक्तिपरिहाराय व्याख्यानव्याख्येयभावाश्रयणे सङ्गत्यागसमभवन-योर्योगत्वं सुमतयः कल्पयिष्यन्तीति सिद्धत्वान्मन्दा इत्युक्तम्। यत् समत्वं स

एवेति 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इतिवद् द्रष्टव्यम् । ननु निष्कामनादिविशिष्टकर्मकरणस्यैव ज्ञानोपायरूपयोगत्वादत्र च सङ्गत्यागसमभवनयोरेवोक्तत्वेनाङ्गिनः कर्मकरणस्यानुक्तेः कथं स एवेत्युक्तमित्यत आह- योगैकदेश इति। ॥ ४८ ॥

## भावरत्नकोशः

॥ **गतार्थतेति** ॥ उपायस्थः ज्ञानोपायभूतं कर्माधिकुर्वन् इत्यस्य 'कर्मण्येवाधिकारः' इत्यनेनार्थातिशयाभावादिति भावः । 'परिहारायार्थमाह' इति पाठे परिहारायेत्यनन्तरमवतारं वदन्निति शेषः । फलाभिसन्धिं विना मत्प्रसादाद्युद्देशेनैव कर्म कुर्विति 'कर्मण्येव' इति पूर्वश्लोके यदुक्तं तदेवानेन 'योगस्थः' इति श्लोकेन स्पष्टयतीति भाष्यार्थः स्पष्टत्वान्नोक्तः । 'निष्कामतादि' इत्यादिशब्देन फलसिद्ध्यसिद्ध्योः समत्वस्येश्वरार्पणस्य च ग्रहः । योगस्य पुरुषं प्रत्यधिकरणत्वाभावात् तात्पर्यमाह- **ज्ञानोपायमिति** ॥ योगशब्दस्योपायमात्रार्थत्वेऽपि ज्ञानस्य योग्यतया सम्बन्ध इति भावेन ज्ञानोपायमित्युक्तम् । 'कुरु कर्माणि' इति 'सङ्गं त्यक्त्वा' इति कर्मणां सन्निधानात् सङ्गशब्दितसम्बन्धप्रतियोगित्वमिति मन्यमान आह- **कर्मसम्बन्धमिति** ॥ 'त्यक्त्वा कर्मफलासङ्गम्' इत्यादौ फलसङ्गस्यैव त्याज्यत्वावेदनादत्रापि सङ्गशब्देन फलस्नेह एव ग्राह्य इति भाष्ये फलेत्युक्तमिति भावः । तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वेति शङ्करभाष्यमनुवदति- **ईश्वर इति** ॥ पूर्वेणैव 'इच्छा च तस्य युक्ता' इति भगवत्प्रसादकामनायाः कर्तव्यताप्रतिपादनेनैवेत्यर्थः । त्यक्त्वेति गीतापदं भाष्ये किमित्यव्याख्यायानूद्यत इत्यतस्तत्तात्पर्यमाह- **तत एवेति** ॥* **एकस्यैव** समत्वस्यैव । **तथा सति** समत्वस्यैकस्यैव ग्रहणे सति । **एतयोः** समत्वसङ्गत्यागयोः । **कार्ये** समत्वे ।

---

* भावबोधः- अन्यथा सङ्गत्यागादेवेति वक्तव्यम् । तच्च शब्दतो गुर्विति भावः । उमर्जीयम्- त्यागमात्रपरामर्शे यत्किञ्चित्त्यागस्यापि समभवनहेतुत्वं भाति । तच्चायुक्तम् । अननुभवादित्यत आह- **सङ्गत्यागादेवेति** ॥

**कारणं** सङ्गत्यागः। **को योगः** ज्ञानोपायः क इत्यपेक्षायामित्यर्थः। मयेत्यस्यार्थो- **भगवतेति**॥ **मन्दास्त्विति**॥ 'योगस्थः' इति व्याख्येयं पदम्। 'सङ्गं त्यक्त्वा', 'सिद्ध्यसिद्ध्योस्समो भूत्वा' इति पदद्वयं तद्व्याख्यानमिति वक्तव्यम्। अन्यथा सङ्गत्यागसमभवनयोर्योगत्वेन पुनरुक्त्यापत्तेरिति पर्यालोचने सङ्गत्यागसम- भवनयोर्योगत्वं प्रेक्षावतां सिद्धमेवेत्यतो 'मन्दाः' इत्युक्तम् *॥ **पृथगेवेति**॥ योगस्थत्वं कर्म कुर्वतो यद् विशेषणं तस्मादिति शेषः। एते सङ्गत्यागसमभवने योगस्थत्वादन्ये एव विशेषणे कर्म कुर्वत इति कल्पयिष्यन्तीत्यर्थः। इदं 'समत्वं योग उच्यते' इत्येतत्॥ **यत् समत्वमिति**॥ 'सा वैश्वदेव्यामिक्षा' इतिवदिदं ज्ञातव्यम्।

ननु निष्कामतादिविशिष्टकर्माण्येव योगः। सङ्गत्यागसमभवने तु तदेकदेश- भूते। अतः कथं 'समत्वं योग उच्यते' इत्यत्र यत् समत्वमिति स एव योग इत्युक्तिरित्यत आह- **योगैकदेश इति**॥ 'योगस्थः' इत्यत्र योगो नाम क इत्यपेक्षायां सङ्गत्यागसमभवने एव योगशब्दार्थत्वेनात्र विवक्षिते। नतु विशेष्यभूत- कर्माण्यपि। तथाच 'योगस्थः योगैकदेशसङ्गत्यागसमभवननिष्ठस्सन् कर्माणि कुरु' इति भगवतोऽभिसन्धिरिति भाष्याभिप्राय इति भावः। अनेन 'योगस्थः कुरु कर्माणि' इति किमर्थमुच्यत इति कृतचोद्यं परिहृतं भवति। यत्तु 'योगो हि सङ्गत्यागसमभवनरूपतया भगवतैव व्याख्यात इत्युक्तम्। तत्र द्वयं योग उच्यत इति वक्तव्ये समत्वं योग इति कथमुच्यत इत्यत आह- **योगैकदेश इति**' इत्यव- तारणं, तत्तु 'कार्ये गृहीते कारणमर्थाद् गृहीतम्' इति टीकाननुगुणम्।

गीताक्षरार्थस्तु- कर्मण्येवेत्यनेनोक्तं स्पष्टीक्रियते- **योगस्थ इति**॥ योग उपायः। ज्ञानोपायमनुतिष्ठन् सङ्गं फलस्नेहं त्यक्त्वा तत एव फलरागत्यागत एव

---

* भावबोधः- **मन्दास्त्विति**॥ त्यक्त्वेति क्त्वाप्रत्ययेन समभावापेक्षया फलस्नेह- त्यागस्य पूर्वकालीनत्वप्रतीत्या कार्यकारणभावसिद्धौ न तयोः पृथग् विशेषणत्वं बुद्धिमन्तः कल्पयिष्यन्तीति भावः। उमर्जीयम्- 'सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुरु' इत्युक्ते सङ्गत्यागसमभवनयोः कर्माङ्गत्वं ज्ञायते। क्त्वाप्रत्ययात्। कर्माङ्गस्य च योगत्वं सुमतीनां सिद्धमेवेत्यतो मन्दा इत्युक्तम्।

सिद्ध्यसिद्ध्योः स्वर्गादिफलप्राप्त्यप्राप्त्योः समः उन्नाहमनुन्नाहं चाप्राप्नुवन् केवलमीश्वरप्रसादाय कर्माणि स्वविहितधर्मान् कुरु। 'योगस्थः' इत्युक्ते को योग इत्यपेक्षायां भगवता 'सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योस्समो भूत्वा' इति योगो व्याख्यातः। मन्दास्तु पृथगेवैते विशेषणे कल्पयिष्यन्तीति तदनुजिघृक्षयेदमुच्यते- **समत्वमिति** ।। कार्ये गृहीते कारणमर्थाद् गृहीतमेवेति त्यागहेतुकसमभवनमेव योग उच्यते ज्ञानिभिरिति। ।। ४८ ।।

## भगवद्गीता

दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ।। ४९ ।।

## भाष्यम्

इतश्च योगाय युज्यस्वेत्याह- **दूरेणेति** ।। बुद्धियोगाज्ज्ञान-लक्षणादुपायात्। दूरेण अतीव। अतो बुद्धौ शरणं ज्ञाने स्थितिम्। फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः। ।। ४९ ।।

## प्रमेयदीपिका

ननु योगोपदेशमुपक्रम्य कर्मणो बुद्धियोगादवरत्वं किमर्थमुच्यत इत्यत आह- **इतश्चेति** ।। युज्यस्व प्रयतस्व। 'यावानर्थः' इति कर्मफलस्य ज्ञान-फलापेक्षयाऽल्पत्वात् 'योगाय युज्यस्व' इत्युक्तम्। अत्र तु तत्रैव हेत्वन्तर-मुच्यते। बुद्धियोगादिति षष्ठीसमासप्रतीतिनिरासायाऽह- **बुद्धियोगा-दिति** ।। लक्षणशब्दः स्वरूपार्थः। पुरुषार्थसम्बन्धिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तमिति भावः। उपायात् पुरुषार्थस्य। दूरशब्दो विप्रकर्षवाची। तस्यात्र कथमन्वय इत्यत आह- **दूरेणेति** ।। उक्तं ज्ञानात् कर्मणोऽतीवावरत्वमिदानीमुपपादनीयम्। तद् विहाय किमिदं तृतीय-पादेनोच्यत इत्यतः साध्यनिर्देशोऽयमिति सूचयन् व्याचष्टे- **अत इति** ।।

**ज्ञाने स्थितिं तदुपाययोगानुष्ठानलक्षणाम्। फलहेतूनां कृपणत्ववर्णनमनुपयुक्तमित्यत आह- फलमिति॥ ॥ ४९ ॥**

## भावदीपिका

॥ **उपक्रम्येति** ॥ 'योगे त्विमां शृणु' इत्युपक्रम्येत्यर्थः ॥ **कर्मफलस्येत्यादि** ॥ काम्यकर्मफलस्य स्वर्गादेर्ज्ञानफलापेक्षयाऽल्पत्वेन काम्यकर्मणो निन्द्यत्वेन ज्ञानोपायाय युज्यस्वेत्युक्तम्। अत्र तु **तत्रैव** काम्यकर्मणो निन्द्यत्व एव तत्कर्तॄणां कृपणत्वादिरूपं हेत्वन्तरमुच्यत इत्यर्थः। 'ज्ञानलक्षणात्' इति मूले ज्ञानस्य यल्लक्षणमसाधारणो धर्म इति प्रतीतिवारणाय लक्षणशब्दार्थमाह- **लक्षण इति** ॥ ननु बुद्धेर्योगादिति षष्ठीसमासत्वेऽपि ज्ञानोपायरूपनिवृत्तकर्मापेक्षया काम्यकर्मणोऽतीवावरत्वेन प्रकृतोपयोगसद्भावात् किमर्थं बुद्धिश्चासौ योगश्चेति कर्मधारयाश्रयणमित्यतोऽभिप्रायमाह- **पुरुषार्थसम्बन्धिनेति** ॥ स्वर्गरूपपुरुषार्थसम्बन्धिना काम्यकर्मणेत्यर्थः। **तथाभूतस्य** मोक्षरूपपुरुषार्थसाधनस्य।

अयमर्थः। स्वर्गमोक्षौ द्वावेव पुरुषार्थौ प्रसिद्धौ। तत्र 'अवरं कर्म बुद्धियोगात्' इति सहनिर्देशात् स्वर्गरूपपुरुषार्थसाधनकर्मापेक्षया मोक्षरूपपुरुषार्थसाधनस्य ज्ञानस्यैव कथनं सङ्गतम्। उभयोः पुरुषार्थसाधनत्वसाम्याद्। इदं च कर्मधारयसमास एव घटते न षष्ठीसमासे। यदि च स्वर्गमोक्षाविव ज्ञानमपि स्वतः पुरुषार्थः स्यात् तदोक्तरीत्या षष्ठीसमासमङ्गीकुर्मः। नचैवमिति। **विप्रकर्षो** देशव्यवधानम् ॥ **तस्यात्रेति** ॥ कर्मणोऽवरत्वे कथं देशतो विप्रकर्षरूपदूरत्वसम्बन्ध इत्यर्थः ॥ **तदुपाययोगानुष्ठानेति** ॥ ज्ञानोपायभूतनिवृत्तकर्माख्ययोगानुष्ठानेत्यर्थः ॥ **अनुपयुक्तमिति** ॥ कृपणशब्दस्य दीनपर्यायत्वात् 'फलहेतवः कृपणाः' इति फलकारणानां कर्मणां दीनत्वकथनमयुक्तम्। पुरुषाणामेव दीनत्वाख्यकृपणत्वकथनौचित्यादिति भावः ॥ **इत्यत आहेति** ॥ फलहेतुशब्देन बहुव्रीहिणा पुरुषा एव गृह्यन्तेऽतस्तेषां कृपणत्वकथनं युक्तमित्याशयेनाऽहेत्यर्थः। ॥ ४९ ॥

## भावरत्नकोशः

**उपक्रम्य** 'योगे त्विमां शृणु' इत्यनेन। अवरत्वमित्यनन्तरं प्रकृतासङ्गत्तमिति शेषः। युज्यस्वेति युज समाधावित्यस्य रूपम्। श्यन्प्रयोगात्। समाधिश्च चित्तवृत्तिनिरोधः। ततश्च समाधेर्योगरूपत्वाद् योगाय युज्यस्वेत्ययुक्तमित्यतो व्याचष्टे- **प्रयतस्वेति ॥** अस्मादपीत्यर्थकेन 'इतश्च' इत्यनेन प्रागेको हेतुरुक्त इति सूचितम्। तं हेतुं विवृण्वन्नाह- **यावानर्थ इतीति ॥** श्लोक इति शेषः। योगाय युज्यस्व ज्ञानोपायाय प्रयतस्व। **अत्र तु** 'दूरेण' इति श्लोके। हेत्वन्तरं कर्मरूपस्य पुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरम् ॥ **प्रतीति-निरासायेति ॥** उक्तसमासाश्रयणे योगशब्दस्योपायोऽर्थः। बुद्धेर्योऽय-मुपायः कर्मलक्षणः। 'कर्मणा ज्ञानमातनोति' इति श्रुतेः। तस्मात् कर्मणः कर्म-णोऽवरत्ववर्णनमयुक्तमिति भ्रान्तिं निरस्यन् कर्मधारयमाह भाष्यकार इत्यर्थः। भाष्ये ज्ञानस्य यल्लक्षणमसाधारणो धर्म इति प्रतीतिनिरासायाऽह- **लक्षणशब्द इति ॥*** षष्ठीसमासपक्षेऽपि ज्ञानोपायरूपनिवृत्तकर्मापेक्षया काम्यकर्मणोऽतीवा-वरत्वरूपप्रकृतसिद्धेः किं कर्मधारयाश्रयणेनेत्यतोऽभिप्रायमाह- **पुरुषार्थेति ॥** पुरुषैरर्थ्यमानो हि पुरुषार्थः। स च द्विविधः। स्वर्गो मोक्षश्चेति। तत्र बुद्धियोगादवरं कर्मेति सहनिर्देशात् स्वर्गरूपपुरुषार्थसाधनप्रवृत्तकर्मापेक्षया मोक्षरूपपुरुषार्थ-साधनज्ञानस्यैव बुद्धियोगशब्देन ग्रहणं युक्तम्। तच्च कर्मधारयसमास एव घटते। न षष्ठीसमासपक्षे। यदि च स्वर्गमोक्षाविव ज्ञानमपि स्वतः पुरुषार्थः स्यात् तदा षष्ठीसमासः स्यादपि। नचैवमिति भावः। **विप्रकर्षवाची** देशव्यवधान-वाची। **तस्य** देशतो व्यवधानरूपदूरत्वस्य। **अत्र** कर्मणोऽवरत्वरूपेऽर्थे। नात्र दूरशब्दो देशव्यवधानार्थोऽभिप्रेतः। येनानन्वयशङ्का। किन्त्वतिशयेनाऽत्यन्तिकत्व-लक्षणेनेत्यर्थ इति 'अतीव' इति भाष्यार्थ इति भावः। ज्ञानस्य ज्ञानिस्थितिं प्रत्यनधिकरणत्वादाह- **तदुपायेति ॥** ज्ञानोपायभूतनिवृत्तकर्मेत्यर्थः। बुद्धौ 'शरणमन्विच्छ' इति प्रकृतार्थासङ्गतत्वादाह- **अनुपयुक्तमिति ॥ फलमि-**

* उमर्जीयम्- ज्ञानस्योपायासाधारणधर्मत्वाभावादाह- **लक्षणशब्द इति ॥**

**तीति** ॥ फलं फलाभिसन्धानं कर्मनिर्वर्तने हेतुः कारणं येषां पुरुषाणां ते फलहेतवः पुरुषाः कृपणाः दीना यतः अतो ज्ञानादतीवावरं कर्मेति कर्मणो ज्ञानादतीवावरत्ववर्णने तुरीयपादो हेतुसमर्पक इति भाष्याभिप्राय इति न प्रकृतासङ्गतिरिति भावः।

गीताक्षरार्थस्तु- ज्ञानोपायाय यतस्वेत्युक्तार्थे कर्मफलस्य ज्ञानफलादल्पत्वादित्येको हेतुः 'यावानर्थः' इत्यत्रोक्तः। अत्र तु कर्मरूपस्य पुरुषार्थोपायस्य ज्ञानरूपपुमर्थोपायादधमत्वरूपं हेत्वन्तरमुच्यते- **दूरेणेति** ॥ बुद्धियोगाद् ज्ञानलक्षणात् पुमर्थोपायात् कर्म दूरेणावरं अतीव निकृष्टम् हि यतः अतो बुद्धौ ज्ञानलक्षणोपाये शरणं तदुपयोगानुष्ठानलक्षणां स्थितिम् अन्विच्छ कुर्विति यावत्। कथं कर्मणो ज्ञानादतीवावरत्वमित्यत उक्तम्- **कृपणा इति** ॥ फलं कर्मकृतौ हेतुर्येषां ते तथा। काम्यकर्मिणः कृपणाः दीनाः। 'इमं लोकं हीनतरं वा विशन्ति' इति हि श्रुतिः। अतो दूरेणावरमिति। ॥ ४९ ॥

### भगवद्गीता

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५०॥

### भाष्यम्

ज्ञानफलमाह- **बुद्धियुक्त इति** ॥ सुकृतमप्यप्रियं मानुष्यादिफलं[1] जहाति। न बृहत्फलमुपासनादिजनितम्[2]। 'नहास्य[3] कर्म क्षीयते', 'अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्रा-

१. ब. मानुष्यादि जहाति।

२. ब. न बृहत्फलमप्युपासनादिनिमित्तम्।

३. ब. न तस्य।

ण्यन्तवदेवास्य तद् भवति' इत्यादिश्रुतिभ्यः । अतः कर्मक्षयश्रुतिर-ज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरप्यनिष्टविषया । नहीष्टपुण्यक्षये किञ्चित् प्रयोजनम् । नचेष्टनाशो ज्ञानिनो युक्तः । इष्टाश्च केचिद् विषयाः । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति', 'प्रजापतेस्सभां वेश्म प्रपद्ये', 'यशोऽहं भवानि[1] ब्राह्मणानां', 'स्त्रीभिर्वा यानैर्वा', 'अस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते', 'कामान्नी कामरूप्यनुसञ्चरन्', 'स एकधा भवति' इत्यादिश्रुतिभ्यः । बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात् कर्मसुखे न विरोधः । अनुभवशक्तिश्चेश्वरप्रसादात् । श्रुतेश्च । नच शरीरपातात् पूर्वमेव तत्[2] । 'स तत्र पर्येति', 'एतमानन्दमय-मात्मानमुपसङ्क्रम्य' इत्याद्युत्तरत्र श्रवणात् ।

## प्रमेयदीपिका

**बुद्धियुक्तः** प्रेक्षावान् काम्यं सुकृतं दुष्कृतं च जह्यादिति योगस्वरूप-निरूपणपरतां निराकर्तुमाह- **ज्ञानेति ॥** कथं कर्मणो ज्ञानादतीवावर-त्वमित्यतः काम्यकर्मिणः कृपणा दीनाः, 'इमं लोकं हीनतरं वा विशन्ति' इत्युक्तेरित्युक्तम् । तथाऽपि कथं दूरेणावरमित्यपेक्षायां, कर्मफलाद् विलक्षणं ज्ञानफलमाहेत्यर्थः । प्रतीतार्थेऽनुपपत्तिं तूत्तरत्र दर्शयिष्यति । अत्र दुष्कृतवत् सुकृतस्यापि सर्वात्मना हानं प्रतीयते । तत्सङ्कोचेन व्याचष्टे- **सुकृतमपी-ति ॥** अप्रियं सुकृतं कीदृशमित्यत आह- **मानुष्यादीति ॥** व्यावर्त्यमाह-**नेति ॥** बृहत् प्राङ् मुक्तेः ज्ञानादिगुणविवृद्धिलक्षणं, तदनन्तरं चाऽनन्द-

---

१. ब. भवामि ।

२. ब. पूर्वमेतत् ।

वृद्धिरूपं फलं यस्य तद् बृहत्फलम्। तथाभूतं सुकृतमेव नास्ति, कारणाभावादित्यत आह- **उपासनेति**॥ आदिपदेन निवृत्तं कर्म। कुतः सङ्कोच इत्यत आह- **न हास्येति**॥ यजते ददाति। तप्यतेऽनेन[१]। अत्रापि 'अविदित्वा' इति विशेषणाज्ज्ञानिनः सुकृताक्षयः प्रतीयते। उत्तरत्र वाऽस्याः[२] श्रुतेरुपयोगः।

ननु 'नास्त्यकृतः कृतेन' इत्यादिश्रवणात् सत्प्रतिपक्षा एताः श्रुतय इत्यत आह- **अत इति**॥ विशेषश्रुतेर्बलवत्त्वादिति भावः। श्रुतिः श्रवणम्। 'क्षीयन्ते चास्य कर्माणि' इति ज्ञानिनोऽपि कर्मक्षयः प्रतीयत इति चेन्न। निरवकाशश्रुतिविरोधेनास्य दुष्कृतविषयत्वात्। 'तदा विद्वान् पुण्यपापे विधूय' इति ज्ञानिनोऽप्युभयक्षयश्रुतिरस्तीत्यत आह- **उभयेति**॥ उक्तैव युक्तिः। युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम्। तथा हि। उपासनादिजनितं सुकृतं ज्ञानिनः किमिष्टमुतानिष्टम् । आद्ये किं तत्तदिच्छया क्षीयत उत ज्ञानस्वभावात्। आद्यं दूषयति- **नहीति**॥ येन ज्ञानी तत्क्षयमिच्छेदिति शेषः। द्वितीयं निराकरोति- **नचेति**॥ ज्ञानस्यापुरुषार्थताप्रसङ्गादिति भावः। नान्त्यः। अनिष्टत्वे कारणाभावात्। निष्फलत्वादनिष्टमित्यत आह- **इष्टाश्चेति**॥ केचिदित्यलौकिकाः। मुक्तौ अलौकिका विषया इष्टा भवन्ति। तत्प्राप्तिः सुकृतफलमिति भावः। मुक्तो विषयानिच्छतीत्येतत् कुत इत्यत आह- **स यदीति**॥ यशः यशस्वी। ब्राह्मणानां सकाशात्। मुक्तो यद्यत् कामयते तत्तत् कर्म अस्मात् परमात्मनः सृजते। इष्टविषयप्राप्तिः सुकृतफलमित्येतदप्यनया श्रुत्योच्यते। उपासनादिकमेव ज्ञानी न करोति। कृतेन वा सुकृतं न जायत इत्येतदप्यनया निराकृतम्।

---

१. प. अनेनेति शेषः।

२. ग.प. चास्याः।

ननु मुक्तः किमर्थं विषयानिच्छेत्। न तावत् सुखार्थम्। ज्ञानेनाऽवरण-रूपाविद्यानिवृत्तावात्मस्वरूपसुखस्य व्यक्तत्वात्। पृथक् सुखस्यानङ्गीकारात्। नापि दुःखनिवृत्त्यर्थम्। अविद्यानिवृत्त्यैव तत्सिद्धेरिति। मैवम्। नाविद्यैवाऽत्मस्वरूपावरणम्। किन्त्वीश्वरेच्छाऽपि। तथाच वक्ष्यति। तथाच ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति। स्वरूपसुखं च बहुतरं व्यज्यते। नतु सर्वम्। ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति। अत्र च भाष्यकृतैव तत्रतत्र प्रमाणान्युक्तानि। अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते।

ननु ज्ञानमात्रसाध्यं यत् स्वरूपसुखं तदेव बहुतरमस्ति। अतः कर्मसाध्य-विषयभोगव्यङ्ग्यसुखाङ्गीकारः किमर्थमित्यत आह- **बहुत्वेऽपीति** ॥ कर्मसुखे अङ्गीकृत इति शेषः। शरीरेन्द्रियरहितस्य मुक्तस्य कथं विषयानुभवे शक्तिरित्यत आह- **अनुभवेति** ॥ तदुक्तं 'ब्राह्मेण जैमिनिः' इति। किञ्च 'कामरूप्यनुसञ्चरन्' इत्यादिलीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यत इत्याह- **श्रुतेश्चेति** ॥ ननु यदेतदुदाहृतासु श्रुतिषु विषयेच्छादिकं श्रूयते तच्चरमशरीरपातात् पूर्वकालीनं किं न स्यादित्यत आह- **नचेति** ॥ 'अस्माच्छरीरात् समुत्थाय स तत्र पर्येति', 'अस्माल्लोकात् प्रेत्य', 'एतमानन्दमयमात्मानम्' इत्याद्युत्तरत्र श्रवणात्। इत्यादीति क्रियाविशेषणम्।

## भावदीपिका

बुद्धियुक्त इत्यस्य व्याख्यानम्- **प्रेक्षावानिति** ॥ परोक्षज्ञानीत्यर्थः ॥ **योग-स्वरूपेति** ॥ काम्यकर्मदुष्कृतयोस्त्यागोऽपि योग एवेत्यर्थः। **दीनाः** दुःखिनः। कुतो दीनत्वमवगम्यत इत्यत आह- **इममिति** ॥ क्षयिफलश्रवणादिति भावः ॥ **तथाऽपीति** ॥ काम्यकर्मिणां कृपणत्वेऽपीत्यर्थः ॥ **कथमिति** ॥ ज्ञानिनामपि

कृपणत्वसम्भवेन साम्यस्यापि सम्भवादिति भावः । **कर्मफलात्** काम्यकर्मफलात्। ननु योगस्वरूपरूपः प्रतीतार्थ एव किं न स्यादित्यत आह- **प्रतीतार्थ इति ॥ उत्तरत्रेति ॥** 'अतो योगाय' इत्यादिना तृतीयपादव्याख्यानेत्यर्थः । अस्यार्धस्यास्मद्रीत्या ज्ञानफलकथनपरत्वे तस्माद् ज्ञानस्यैव महाफलकत्वाज्ज्ञानोपायाय युज्यस्वेति तृतीयपादः सङ्गच्छते । बुद्धियुक्तः प्रेक्षावानित्युक्तरीत्या स्वरूपनिरूपणपरत्वे तु बुद्धियुक्तः सुकृतदुष्कृते जह्यात्। 'तस्माद् योगाय युज्यस्व' इत्यसङ्गतम् । सुकृतदुष्कृते जह्यादिति योगस्य विहितत्वेन तस्मादिति पुनर्विधानस्यासङ्गतत्वात् । किञ्च यद्युक्तः सन् यज्जहाति तदुपायार्थमेव यतेतेति विधानमेव सङ्गतमित्युत्तरत्र प्रदर्शयिष्यतीति द्रष्टव्यम् । मूले मानुष्यादिफलं मानुष्यादिफलकमित्यर्थः । अत्र सुकृतदुष्कृतशब्दावदृष्टपरौ ज्ञातव्यौ ॥ **व्यावर्त्यमिति** ॥ अप्रियमिति विशेषणस्य व्यावर्त्यमाहेत्यर्थः ॥ **तथाभूतं सुकृतमिति** ॥ आनन्दाभिवृद्ध्यादिफलकं पुण्यमित्यर्थः । कुत इत्यत आह- **कारणेति** ॥ तादृशपुण्यजनकसाधनाभावादित्यर्थः ॥ **न ह्यस्येतीति** ॥ ज्ञानात् पूर्वं कृतस्य ज्ञानाभिवृद्धिजननद्वाराऽक्षयत्वं ज्ञानोत्तरस्य तु मुक्तावानन्दाभिवृद्धिहेतुत्वेनेति द्रष्टव्यम्। जुहोति यजतीति पदयोः पुनरुक्तिपरिहारायाऽह - **ददातीति** ॥ यजदेवपूजासङ्गतिकरणदानेष्विति धातोरिति भावः। 'तपस्तप्यते' इति श्रुतौ तपनं तप इति न भावव्युत्पत्तिः । किन्तु तप्यते येन पुमानिति व्युत्पत्त्या तपःशब्देन कृच्छ्रचान्द्रायणादिकं ग्राह्यम् ॥ **तप्यतेऽनेनेति** ॥ कृच्छ्रादिरूपं तपोऽनेन पुंसा तप्यते आर्ज्यते क्रियत इत्यर्थः ।

ननु तप्यतेऽनेनेति कथमुक्तम्? 'तपस्तपःकर्मकस्यैव' । 'तप सन्तापे' इति धातोः कर्ता कर्मवद् भवति । स च कर्मवद्भावस्तपःकर्मकस्यैवेति सन्तपनकर्तुः कर्मसञ्ज्ञायां 'कर्मणि यक्' इति यक्प्रत्यये तप्यत इति रूपं सम्पद्यते । तथाच तापसः स्वर्गीयसन्तपनरूपं तपः तप्यते, आर्जयतीत्यर्थः । तस्य कर्तुः कर्म-

वद्भावोऽत्र विधीयते। 'तप्यते तपस्तापसः' इत्युक्तं काशिकायाम्। तथोत्तरत्र गीतायामपि 'तप्यन्ते ये तपो जनाः' इत्युक्तम्। एवं च प्रकृतेऽपि तपस्तप्यते इत्यत्र कर्मभूतस्य सन्तपनरूपस्य तपसस्तप्यत इति तिङाऽभिहितत्वं यदा प्राप्तं तदा सन्तपनकर्तुरपि कर्मसञ्ज्ञात्वेन कर्मत्वसद्भावात् तिङाऽभिहितत्वं प्राप्तमेवेति 'कर्तृकरणयोस्तृतीया' इति तिङाद्यनुक्ते कर्तरि करणे च तृतीयाया विहितत्वात्, रामेण बाणेन हतो वालीत्यत्र वालिन इव कर्तुस्तापसस्य तप्यत इति तिङा परम्परयाऽभिहितत्वात् प्रथमैव युक्तेति चेन्न। तपस्तप्यत इत्यत्र तपःशब्देन न सन्तपनरूपं तपो गृह्यते। येनोक्तसूत्रेण सन्तपनकर्तुः कर्मवद्भावेन तिङाऽभि-हितत्वात् तृतीया न स्यात्। किन्तु सन्तपनकारणीभूतं कृच्छ्रादिकमेव। तथाचानेन सूत्रेण सन्तपनकर्तुरेव कर्मवद्भावविधानेन तपनकारणीभूतकृच्छ्रादिकर्तुः कर्म-वद्भावाविधानात् तपोरूपकर्मण एव तिङाऽभिहितत्वेन कर्तुस्तापसस्य रामेण बाणेनेतिवत् तिङाऽनभिहितत्वात् तृतीया युक्तेति। अनेनैवाभिप्रायेण भावबोधे तप्यत इत्यत्र कर्तुस्तिङाद्यनुक्तेरनेनेत्युक्तमित्यवगन्तव्यम्।

ननु ज्ञानिकृतस्याक्षयफलवत्त्वस्याश्रवणादेतच्छ्रुत्युदाहरणमसङ्गतमत आह- **अत्रापीति**॥ 'विशेषनिषेधः शेषविध्यनुज्ञापकः' इति न्यायादिति भावः। अत एवास्वरसादाह- **उत्तरत्र वेति**॥ अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्रेत्युत्त-रत्रोच्यते। तत्र काऽसौ कर्मक्षयश्रुतिरित्यपेक्षायामियमुदाहृतेत्यर्थः॥ **नास्त्यकृतः कृतेनेति**॥ अकृतो मोक्षः कृतेन कर्मणा नास्तीत्युक्त्या सम्पादितस्य सुकृतस्य क्षयोऽर्थात् प्रतीयत इति सत्प्रतिपक्षा अकर्मक्षयश्रुतय इत्यर्थः ॥ **विशेषश्रुते-रिति**॥ 'न हास्य' इति श्रुतेर्ज्ञानिकृतकर्माक्षयत्वप्रतिपादनपरत्वेन विशेषवचनतया समबलत्वाभावे न सत्प्रतिपक्षत्वमिति भावः। ननु सर्वत्रेत्यस्य वाक्येष्वित्यर्थत्वात् श्रुतिग्रहणं व्यर्थमित्यत आह- **श्रुतिरिति**॥ ज्ञानिनोऽपि 'तस्मिन् दृष्टे परावरे' इति वाक्यशेषात् तस्मिन् दृष्टे सति अस्य कर्माणि क्षीयन्त इति ज्ञानिनः

कर्मक्षयवचनात् पुनः सत्प्रतिपक्षत्वमिति भावः ॥ **निरवकाशश्रुतीति** ॥ 'न हास्य' इति श्रुतेरर्थान्तरे घटनाभावेन निरवकाशत्वादित्यर्थः ॥ **उक्तैवेति** ॥ 'न हास्य' इति निरवकाशश्रुतिविरोधाद् दुष्कृतस्य सर्वात्मना नाशः पुण्यस्य चानिष्टस्यैव नाश इति सङ्कोचः कार्य इति भावः ।

॥ **तदिच्छयेति** ॥ इष्टमपि सुकृतं क्षीयतामिति ज्ञानीच्छयेत्यर्थः ॥ **अपुरुषार्थतेति** ॥ इष्टविघातित्वेनेत्यर्थः । कारणमाशङ्कते- **निष्फलत्वादिति** ॥ अर्शआद्यजन्तत्वमभिप्रेत्याऽऽह- **यशस्वीति** ॥ **परमात्मनस्तदनुग्रहात्** ॥ **अनया श्रुत्येति** ॥ 'यद्यत् कामयते तत्तत् कर्म सृजते' इति स्पष्टमुक्तेरिति भावः ॥ **अनयेति** ॥ अस्माद्ध्येवेत्यस्मात् पूर्वं 'आत्मानमेव लोकमुपासीत' इत्युपासनोक्तेः, 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति उपासनाजनितसुकृतस्यानाशवचनादिति भावः । **ज्ञानेन** अपरोक्षज्ञानेन ॥ **आवरणेति** ॥ स्वगुणाच्छादिकेत्यर्थः । अज्ञानाविद्यापदाभ्यां लिङ्गशरीरं विवक्षितम् ।

ननु मुक्तानां जन्यसुखसद्भावात् तदर्थं विषयानिच्छन्तीति चेत्, तत्राऽऽह- **पृथक् सुखस्येति** ॥ स्वरूपसुखभिन्नसुखस्येत्यर्थः । जन्यसुखस्येति यावत् । यदर्थं विषयभोगोऽपेक्षितः स्यादिति भावः ॥ **अविद्येति** ॥ लिङ्गशरीरस्यैव दुःखापादकत्वादिति भावः । नन्वीश्वरेच्छाया आवरणत्वमप्रामाणिकमित्यत आह- **तथाचेति** ॥ 'योगी तावन्न मुक्तः स्यात्' इत्युत्तरत्र वक्ष्यमाणप्रमाणे ईश्वरेच्छारूपावरणान्न मुक्तः स्यादित्यर्थस्य विवक्षितत्वेनेश्वरेच्छाया अप्यावरणत्वं गम्यत इत्याहुः । तथाच ज्ञानेनेत्यनन्तरं 'क्षीणकर्मणां कार्यात्यये तदध्यक्षेण सह गतानां गुणत्रयात् परतः स्थितायां विरजायां स्नानेन' इति शेषः ॥ **अशेषेति** ॥ ज्ञानेन लिङ्गशरीरस्य दग्धपटवज्जातत्वात् 'प्रारब्धकर्मशेषस्तु विरजातरणावधिः' इत्युक्तेर्विरजास्नानेन दग्धपटवत् स्थितस्यापि तस्य नाशेऽशेषानिष्टनिवृत्तिर्जातैवेत्यर्थः । व्यज्यत इत्यनन्तरं प्रलये भगवदुदरे स्थितानामिति शेषः । परमेश्वर

